आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ९६

# करणकौस्तुभः ।

कृष्णदैवज्ञविरचितः ।

एतत्पुस्तकं दत्तात्रेय विष्णु आपटे इत्यनेन संशोधितम् ।

तच्च

विनायक गणेश आपटे

इत्येतेन

पुण्याख्यपत्तने

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

शालिवाहनशकाब्दाः १८४९

खिस्ताब्दाः १९२७



मूल्यमाणकनवकम् । ( आ० ९ )

# आदर्शपुस्तकोल्लेखपत्रिका ।

अथास्य करणकौस्तुभनाम्नो ग्रन्थस्य प्रत्यन्तराणि यैर्महाशयैः परहितैकपरायणमनीषया संस्करणार्थं प्रदत्तानि तेषां नामादीनि प्रत्यन्तराणां संज्ञाश्च कृतज्ञतया निर्दिश्यन्ते—

( क. ) इति संज्ञितम्—पुण्यपत्तनीयानन्दाश्रममुद्रणालयस्थसंस्कृतग्रन्थसंग्रहालयान्तर्गतम् । तच्च समग्रं प्रायः शुद्धमारम्भप्रभृतिसमाप्तिपर्यन्तमेकाकाराक्षरैः सुव्यवस्थितलेखनं द्विगुणवेदाकाशेन्द्वग्नि ( ३१०८ ) परिमितग्रन्थाङ्काङ्कितं च । जीर्णतयाऽस्य लेखनकालो भूतर्षि ( ७५ ) संवत्सरेभ्यः प्राक्तनः स्यादित्यनुमीयते ।

( ख. ) इति संज्ञितम्—एतदप्युपरिनिर्दिष्टग्रन्थसंग्रहालयस्थमेव । गोरसरसरस( ६६६९ ) मितग्रन्थाङ्काङ्कितम् । अस्य लेखनकालः प्रारम्भान्नवमाधिकारसमाप्तिं यावत् खेन्द्वष्टेन्दु ( १८१० ) संख्याकः शकः । तदग्रे नयनैकाष्टैक( १८१२ ) मितः शकः । अक्षराकारलेखनरीतिभेदाल्लेखकभेदः प्रतीयते ।

( ग. ) इति संज्ञितम्—' रॉयल एशियाटिक सोसाइटी ' एतन्नामकमोहमयीस्थितग्रन्थसंग्रहालयस्थम् । आद्यन्तयोरधिकारत्रितयाधिकारद्वितयविहीनम् । अथाल्लेखनकालज्ञानसाधनं नास्ति । तथाऽप्यतिजीर्णतया 'क' संज्ञितपुस्तकापेक्षया पञ्चाशत्संवत्सरैः प्राचीनं भवेदिति तर्कयामि ।

इत्यादर्शपुस्तकोल्लेखपत्रिका ।

# अथ करणकौस्तुभस्थश्लोकानामकारादिवर्णानुक्रमेणा-नुक्रमणिका ।

इति करणकौस्तुभस्थश्लोकानामकारादिवर्णानु-
क्रमेणानुक्रमणिका ।



## प्रस्तावना–

–:०:–

अथैष आनन्दाश्रममुद्रणालये करणकौस्तुभनामा ज्योतिःशास्त्रीयग्रन्थः प्रकाश्यते। सोऽयं गोब्राह्मणप्रतिपालकेत्यादिबिरुदावलीविराजिते शिवरायाभिधे महाराजे महीं प्रशासति सति तदनुशासनेन ज्योतिर्विदा कृष्णदैवज्ञेन विरचित इति बालकृष्णात्मजशंकरदीक्षितैर्भारतीयज्योतिःशास्त्रनाम्नि ग्रन्थे (पृ० २९०।२९१) इत्यत्र प्रतिपादितम्। तत एवेदमधुनातनानां महाराष्ट्रवाचकानां विदितमभूत्। ननु ग्रहलाघवादिप्रभृतिबहुविधेषु करणग्रन्थेषु सत्सु किमर्थमयं कृष्णदैवज्ञ एतद्ग्रन्थकरणे प्रवृत्तोऽभूत्। किमर्थं च शिवरायेणायं तादृग्ग्रन्थरचनायां प्रवर्तितः। इति चेच्छृणु। यद्यपि ग्रहलाघवादयः करणग्रन्थाः स्वल्पायाससाध्यगणिताः सुलभावबोधाश्च सन्ति तथाऽपि आसेतु आहिमाचलं सर्वत्र महीमण्डले पञ्चाङ्गनिर्माणे प्रायः शिष्टैर्ग्रहलाघव एवाऽऽद्रियते। स च ग्रहलाघवनामा ग्रन्थो गणेशदैवज्ञेन नेत्रवेदाब्धिभूमिते ( १४४२ ) शाके प्राणायि। तत आरभ्य भूतद्वीन्दुपरिमितेषु ( १२९ ) वत्सरेषु व्यतीतेषु ग्रहलाघवसाध्यगणितं न सामीचीन्येन दृक्प्रत्ययतुल्यतामवतरतीति ग्रहलाघवविषये आक्षेपवादो लोके प्रवृत्तः। अथ चायोग्यकाले अनुष्ठीयमानमपि कर्म सफलं सुखोदर्कं च न भवति। लोकेऽपि यथाकाल एव कृतं कर्म फलदं भवति। यथा बीजावापादि कृषिकर्म प्रावृट्काले कृतं चेत्तदैव फलदं भवति। अन्यथाकाले कृतं चेत्तत्र वृष्टेरभावाद्धान्यलाभो न भवतीत्येतावदेव न किंतूप्तं बीजं नाङ्कुरमप्यासादयतीति सबीजस्य लाभस्य हानिरिति स्पष्टम्। तथा शरीरे चन्दनानुलेपनमुष्णकाले क्रियमाणमेव सुखपर्यवसायि दृश्यते नान्यकाले क्रियमाणम्। प्रत्युत शीतकाले शीतोपचारः क्रियमाणो हिमज्वरादिकं निष्पादयेदित्यपि संभवतीति महदनिष्टं प्रतीयते। तथाच व्यवहारविषयेऽपि अव्यवस्था प्रसज्येतेत्यनुसंधायेमामव्यवस्थां परिहर्तुं यथा महाराष्ट्रीयभाषाशुद्धचर्थं राजव्यवहारकोशनामा ग्रन्थो राजव्यवहारकुशलैर्निष्पादितस्तथा पञ्चाङ्गशुद्ध्या एष करणकौस्तुभनामा ग्रन्थः संक्षिप्तः सन्सुलभोऽपि दृक्प्रत्ययगणितयोस्तुल्यतामापादयञ्छ्रीशिवरायमहाराजेन कृष्णदैवज्ञेन कारित इति

प्रकुरु तत्करणं ग्रहसिद्धये। सुगमदृग्गणितैक्यविधायि यत्।
इति नृपेन्द्रशिवाभिधनोदितः। प्रकुरुते कृतिकृष्णविधिज्ञराट्।

इति तदीयश्लोकात्सिध्यति। एतदनुसंधायैव ग्रन्थकर्त्राऽस्य करणकौस्तुभ इति नाम व्यधायि। खगोलस्थिततत्तज्ज्योतिश्चक्रीयतत्तद्रेखांशगतग्रहनक्षत्रादिज्ञानोपायभूतो ज्योतिःशास्त्रीयग्रन्थः करणशब्देनोच्यते। स च कौस्तुभ इवेत्युपमितसमासः। अत्र

कौस्तुभस्य दृष्टान्तत्वेनोपादानाद्यथा स मणिर्निर्मलोऽत एव स्वप्रभयाऽन्धकारस्थितं वस्तु सम्यक् प्रत्याययति तथाऽयं करणग्रन्थो निर्दोषः सन्दृक्प्रत्ययतुल्यगणितं प्रतिपादयतीति सूचितम् ।

सोऽयं कृष्णदैवज्ञविरचितः करणकौस्तुभः स्वकृतस्यैव तन्त्ररत्ननाम्नोऽतिविस्तृतस्य ग्रन्थस्य संक्षिप्तः परिणाम इति मन्ये । तस्यास्य महतस्तन्त्ररत्नस्य हस्तलिखिता पुस्तिका शंकरदीक्षितानामथवाऽन्येषां केषांचित्दृक्पथं नाद्ययावत्समापतिता । अतः करणकौस्तुभग्रन्थगतानां तत्तत्स्थलीयशङ्कानां परिमार्जने सर्वोत्कृष्टं साधनमज्ञातावस्था-मनुभवतीति महाराष्ट्रवाचकान् संश्राव्य तादृशतन्त्ररत्नग्रन्थपुस्तिकासंपादने प्रयत्नव-द्भिस्तत्रभवद्भिर्भवद्भिर्भवितव्यमिति तान्विज्ञापयितुं करणकौस्तुभग्रन्थसंबन्धिनः कांश्चिद्वि-षयान्संक्षेपत उल्लिलिखिषामि । अत्र ग्रन्थे भागापरपर्यायाश्चतुर्दशाधिकाराः सन्ति । ते च यथा —

| | |
|---|---|
| १—मध्यमग्रहसाधनाधिकारः | २—चन्द्रसूर्यस्पष्टीकरणाधिकारः |
| ३—पञ्चतारास्पष्टीकरणाधि० | ४—त्रिप्रश्नाधि० |
| ५—चन्द्रग्रहणाधि० | ६—सूर्यग्रहणाधि० |
| ७—तिथिपत्रतो ग्रहणसाधनाधि० | ८—उदयास्ताधि० |
| ९—ग्रहच्छायाधि० | १०—चन्द्रशृङ्गोन्नत्यधि० |
| ११—ग्रहयुत्याधि० | १२—नक्षत्रच्छायाधि० |
| १३—पाताधि० | १४—पातसंभवासंभवलक्षणाधिकारश्चेति । |

एतावतैवं स्थूलमानतो ज्ञायते यदेतद्ग्रन्थस्य रचनासरणी ग्रहलाघवानुसारिणीति । यतोऽयं कृष्णदैवज्ञो ग्रन्थारम्भे ग्रन्थनिर्विघ्नपरिसमाप्तिप्रचाराद्यप्रतिबन्धकदुरितोपशमाय वन्दे केशवदैवज्ञसार्वभौमपदाम्बुजमिति ज्योतिर्वित्सार्वभौमकेशवदैवज्ञचरणार-विन्दवन्दनरूपं मङ्गलमाचरति ततो ग्रहलाघवकारस्य गणेशदैवज्ञस्य पितरि केशवदैवज्ञ-विषयेऽतीवाऽऽदरभावं भजत इत्यनुमीयते । ततश्च केशवदैवज्ञप्रणीतज्योतिर्ग्रन्थेष्वपि आदरभागयमित्युक्तिरपि पुनरुक्तिरेवेति । करणकौस्तुभनाम्नि एतस्मिञ्ज्योतिर्ग्रन्थेऽनेन ग्रन्थकर्त्रा गणितारम्भप्रवर्तकं वर्षमानं पञ्चर्षिभूतभूमितं ( १५७५ ) परिगृहीतं तथा क्षेपकाङ्काश्चापि तद्वर्षीयमेषसंक्रमणकालसंभवा निर्दिष्टाः । परं चेतरत्र क्वापि ज्योति-र्ग्रन्थेषु दृष्टिपथमनवतरन् कश्चिद्विशेषोऽत्र प्रतिपादितः । स यथा—सप्तर्षीणां क्षेपका-ङ्कान् ६ रा० ११ अं० ३० क. परिमितान्निर्दिश्य तेषामृषीणां वार्षिकी गतिरष्टौ कलाः (८ क.) अर्थादेकस्मिन्वर्षशतके एकनक्षत्रपरिमितेत्यचकथत् । तदिदं सप्तर्षिकाल-परिगणनं काश्मीराख्यक्षेत्रवर्जमितरत्र प्रदेशे कुत्रापि केनापि नाङ्गीकृतं दृश्यते नापि वा

श्रूयते । एवं सत्यनेन महाराष्ट्रीयेण ज्योतिर्विद्वरेणेयं कालपरिगणना कमुद्देशमनुसंधाय पर्यङ्गीकृतेति ज्ञातुं न पार्यतेऽस्माभिः । ग्रहलाघवकारैर्ज्याचापसाधनं विनैव गणितप्रक्रियां रचयित्वा तयैव रीत्या ग्रहसाधनस्य शिक्षणेनेवेदानींतना ज्योतिर्विदः शास्त्रोपपत्तौ दुर्लक्षवन्तः कृता इति य आक्षेपो गणेशदैवज्ञोपरि च्छत्रोपाह्वैः केरुनानाख्यैर्ग्रहगणितपण्डितैः कृतोऽस्ति सोऽयं नैतद्ग्रन्थविषये स्वोदयमासादयितुं समुत्सहते । यतोऽत्र ग्रन्थे गणितविरचनायां ज्याचापसाहाय्यं परिगृहीतमस्ति । किंच ज्यापिण्डमंशदशकात्मकं परिकल्प्य तदुपयोगो बहुशः स्थलेषु कृत इति । ग्रहलाघवकारेणैकादशसंवत्सरात्मकं वर्षचक्रं परिकल्प्य रसेन्दुखाब्ध्य ( ४०१६ )पेक्षया नाधिकयाऽहर्गणवृद्ध्या भवितव्यमिति व्यवस्था कृता । करणकौस्तुभकारेण त्वेकवर्षात्मकस्यैव चक्रस्य परिकल्पनाद्भूतरसाग्न्य( ३६५ )पेक्षया नाधिकोऽहर्गणो वर्धेताथचाहर्गणमादाय गणितप्रसाधने प्रयासोऽप्यल्पः स्यात्तथाऽपि वर्षगतिनिष्पादने गरीयान्प्रयत्नः कर्तव्यः स्यादिति भाति । अस्मिन्ग्रन्थे वर्षमानं सांप्रतिकसूर्यसिद्धान्तानुसारेण पञ्चषट्त्रि (३६५) दिनानि, पञ्चदश (१५) घट्यः, एकत्रिंशत् (३१) पलानि, एकत्रिंशत् (३१) विपलानि, चतुर्विंशतिः (२४) प्रविपलानीत्येतदात्मकमुररीकृतम् । शून्यायनांशवच्छाकीयं वर्षं शून्यभूतवेद ( ४५० ) परिमितं परिगृह्य तेषामयनांशानां वर्षगतिः खरसात्मक(६०)विकलापरिमिता परिगृहीता । नक्षत्रभोगाश्च ग्रहलाघवोक्तनक्षत्रभोगवत्तत्त्परिमिता एव भवन्ति । तथाऽपि विंशत्यं( २० )शात्मको भरणीभोगो गजखेन्द्वं-( १०८ ) शपरिमित आश्लेषाभोगश्चैकेनांशेन ग्रहलाघवोक्तभोगपरिमाणाद्भिद्यते । तथर्षिनेत्रभ्वं ( १२७ ) शपरिमितो मघाभोगोऽपि ग्रहलाघवोक्तभोगपरिमाणादंशद्वयेन भिन्नो भवतीति ज्ञेयम् । ग्रन्थसमाप्तिसमये शेषे ग्रन्थकर्तृत्वेन स्वीयनाम्नो निर्देशं कुर्वन्कृष्णदैवज्ञः प्रथमतः स्वान्ववायप्रवर्तकस्य ब्रह्मणो मानसपुत्रस्यात एव परमपूज्यस्य कश्यपमहर्षेर्महत्तामुपवर्ण्य स्ववंशानुकीर्तनमित्थमकरोत्—

तदन्वये पावन एव तत्र वंशावतंसोऽभवदुन्नतांसः ।
श्रीमन्महाज्योतिषिविद्वदग्र्यो नाम्ना महादेव इति प्रसिद्धः ॥
तज्जाया किमु जाह्नवी विजयते बर्बाइनाम्नी सदा
तस्यां तज्जनितः सुपुण्यनिचयः श्रीरङ्गनाथानुजः ।
कृष्णः कोङ्कणसत्तटाकनगरे देशस्थवर्यो वसन् ।
तेनायं करणेषु कौस्तुभ इति ग्रन्थः कृतो धीमता ॥ इति ।

तेन कृष्णदैवज्ञस्य पितुर्नाम महादेव इति, मातुर्नाम बर्बाईति, ज्येष्ठभ्रातुर्नाम रङ्गनाथ इत्येवंभूत्वाऽयं देशस्थशब्दाभिधेयो ब्राह्मणः सह्याद्रिसंनिधौ मावळसंज्ञके

प्रदेशे निवसन्नासीदिति कै० शंकरदीक्षितानामभिप्रायः । परंतु सह्याद्रिसंनिधावित्यादिः कस्माच्छब्दादयमर्थोऽवगतः । कोङ्कणसत्तटाकेत्यादिशब्दादिति चेन्नायं हृदयंगमोऽर्थ इति मम प्रतिभाति । यतोऽयं शब्दस्तत्प्रदेशस्थितग्रामविशेषनिर्देशार्थं प्रयुक्तः स्यात् । सचापिग्रामो न खेटखर्वटादिरत्यन्तस्वल्पः । किंतु महान् स्यादिति तत्र नगरशब्दप्रयोगादनुमीयते । नगरशब्देन च नगा इव प्रासादा यत्रेति व्युत्पत्त्या बहुलोकनिवासस्थानमुच्यते । तथा च—

पण्यक्रियादिनिपुणैश्चातुर्वर्ण्यजनैर्युतम् ।
अनेकजातिसंबन्धं नैकशिल्पसमाकुलम् ॥
सर्वदैवतसंबन्धं नगरं त्वभिधीयते ॥

इति नगरलक्षणमुक्तम् । अत एतद्ग्रन्थकर्तुः कृष्णदैवज्ञस्य निवासभूतग्रामनामसंशोधनार्थं महाराष्ट्रीयवाचकान्मुहुर्मुहुर्विज्ञाप्यास्माल्लेखाद्विरमामीत्यलम् ।

पुण्यपत्तने— } आपटे इत्युपनामकविष्णुतनुज-
मि० कार्तिक शु. ११ शनिवारे शके १८४९ } नुर्दत्तात्रेयशर्मा—

=====

ॐ तत्सद्ब्रह्मणे नमः ।

# करणकौस्तुभः ।

कृष्णदैवज्ञविरचितः ।

## तत्र प्रथमाधिकारः ।

उद्यन्मार्तण्डरागं प्रवरतरकराक्रान्तदिक्प्रान्तनागं
तारा यत्पुष्करात्खे स्फुरदमलतराः सीकरा भान्त्यपाराः ।
स्वीया लोका विशोकाः सकलसुखयुता यत्पदाब्जस्मृतेः स्युः
प्रत्यूहव्यूहकालं विबुधवरनुतं तं नमामो गणेशम् ॥ १ ॥
वन्दे केशवदैवज्ञसार्वभौमपदाम्बुजम् ।
छात्रवृन्दमनोभृङ्गनिषेवितमभीष्टदम् ॥ २ ॥
प्रकुरु तत्करणं ग्रहसिद्धये सुगमदृग्गणितैक्यविधायि यत् ।
इति नृपेन्द्रशिवाभिधनोदितः प्रकुरुते कृतिकृष्णविधिज्ञराट् ॥ ३ ॥
अथाभिधास्ये गुणकान्हिमांशौ वेदा इनाः षण्निगमाः खवेदाः ॥
४ १२ ४६ ४०
भाद्योऽब्जतुङ्गे धरणी दिशः क्ष्मावेदाः शशी भूतनये षडीशाः ॥ ४ ॥
१ १० ४१ १ ६,११
सिद्धा नभोगा बुधशीघ्रतुङ्गे मही जिना बाणकृता धृतिश्च ।
२४ ९ १ २४ ४५ १८
गुरौ मही खं कुयमा रसाश्च भृगूच्चकेऽगास्तिथयो महेशाः ॥ ५ ॥
१ ० २१ ६ ७ १५ ११
यमेषवः सूर्यसुते खमर्काः सूर्याः खबाणा अगुजे कुचन्द्राः ।
५२ ० १२ १२ ५० ११
दिशोऽष्टरामा वसुसागराश्च सप्तर्षिजः(जे) खं खमिभा वियच्च ॥ ६ ॥
१० ३८ ४८ ० ० ८ ०
रुद्रास्त्रयं लोकशरा जिनाश्च शुद्धौ समेशेऽब्जतिथीन्दुरामाः ।
११ ३ ५३ २४ १ १५ ३१
इन्द्वग्निसिद्धाः क्षयगे खमष्टवेदाः कुपक्षा द्विशरा रसाग्निः ॥ ७ ॥
३१ २४ ० ४८ २१ ५२ ३६

## गुणकाः ।

| ग्रहाः | चं. | चं.उ. | मं. | बु.उ. | गु. | शु.उ. | श. | रा. | ऋ. | शु. | अब्द. | क्ष. |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| राश्यादि- | ४ | १ | ६ | १ | १ | ७ | ० | ११ | ० | ११ | १ | ० |
| गुणकाः | १२ | १० | ११ | २४ | ० | १५ | १२ | १० | ० | ३ | १५ | ४८ |
| | ४६ | ४१ | २४ | ४५ | २१ | ११ | १२ | ३८ | ८ | ५३ | ३१ | २१ |
| | ४० | १ | ९ | १८ | ६ | ५२ | ५० | ४८ | ० | २४ | ३१ | ५२ |
| | | | | | | | | | | | २४ | ३६ |
| चक्राणि | १२ | १२ | १२ | १२ | १२ | १२ | १२ | १२ | १२ | ३० | ७ | ५ |

### अथ क्षेपकाः ।

युगान्यङ्गदस्रा वि[1]पादाङ्कदस्रा
४ २६ २८॥
विधौ क्षेप उच्चे शरा नागपक्षाः ।
५ २८
खबाणाः कुजे षट् च पिण्डा युगक्ष्मा
५० ६ २८ १४
बुधोच्चे वियत्तत्त्वभूपाः सुरेज्ये ॥ ८ ॥
० २५ १६
नवाष्टेन्दवः षट्कृताः शुक्रतुङ्गे
९ १८ ४६
दिशः षट् खरामाः शनौ त्रीणि विंशत् ।
१० ६ ३० ३ २०
कुपक्षा अगौ भूभुवो द्वौ रदाश्च
२१ ११ २ ३२
मुनीनां रसाः शंकराः खाग्नयश्च ॥ ९ ॥
६ ११ ३०
अथो शुद्धिजेऽर्कास्त्रिचन्द्रा दिनाद्यः
१२ १३
समेशे युगान्यक्षिबाणा नगाक्षाः ।
४ ५२ ५७

---

१ पाठोनैकोनत्रिंशत् ।

क्षये खं नखाः पञ्च चक्राणि चैषा-
० २० ५
मिनाः खाग्नयो वासराः पञ्च चात्र ॥ १० ॥
१२ ३० ७ ५

क्षेपकाः ।

| ग्रहाः | चं. | चं.उ. | मं. | बु.उ. | गु. | शु.उ. | श. | रा. | ऋ. | शु. | अब्द. | क्ष. |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| राश्या- | ४ | ५ | ६ | ० | ९ | १० | ३ | ११ | ६ | १२ | ४ | ० |
| दिक्षे- | २६ | २८ | २८ | २५ | १८ | ६ | २० | २ | ११ | १३ | ५२ | २० |
| पकाः | २८ | ५० | १४ | १६ | ४६ | ३० | २१ | ३२ | ३० | ० | ५७ | ५ |
| | ४५ | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० |
| चक्राणि | १२ | १२ | १२ | १२ | १२ | १२ | १२ | १२ | १२ | ३० | ७ | ५ |

पञ्चाद्रितिथ्यूनशको गताब्दास्तद्घ्ना गुणाः क्षेपयुता ध्रुवास्ते ।
१५७५
सौराब्दतोऽहर्गणजा युतास्तैः सूर्योदये मध्यमखेचराः स्युः ॥ ११ ॥
गताब्दा हृताः पञ्चशैलैर्भृगूच्चे
७५
विधौ मध्यमे चापि लिप्ता धनं ताः ।
विपादाः कुजाग्व्योः शनौ चार्धितास्ता
विधूच्चेऽष्टमांशस्त्वृणं शेषयोः खम् ॥ १२ ॥
चैत्रादियातास्तिथयो विशुद्धा निरग्रशुद्ध्याऽवमनाडिकाढ्यैः ।
स्ववेदषड्लब्धदिनैश्च हीना वर्षेशनाड्यूनितषष्टियुक्ताः ॥ १३ ॥
६४
अथो द्युसंघोऽब्दपवारयुक्तो वारो रवेः सैकनिरेकता क्वचित् ।
शुद्ध्यल्पकाश्चेत्तिथयो गताब्दद्युवृन्दतः खेचरसिद्धिरुक्ता ॥ १४ ॥
स्फुटोऽधिकश्चेन्मधुतोऽपि यातस्तिथीस्तदीयाः परिगृह्य साध्यः ।
सदा न शुद्ध्यानयने च लब्धस्तद्युक्तशुद्ध्या द्युगणो विधेयः ॥ १५ ॥
स्वखाङ्गांशहीनो गणो द्विद्विविश्वैरवाप्तांशयुक्तिर्निघ्नवृन्दाल्लवाद्यः ।
६० १३२२ ३
भवेन्मित्र एवं बुधो दैत्यमन्त्री द्रुतं मन्दमाहेयदेवेज्यतुङ्गम् ॥ १६ ॥

यस्तु सुधाकरतामुपयातः शक्रसमभ्यसनाद्गण एषः ।
१४
स्वीयमुनीन्दुलवादिवियुक्तः खेन्द्रगणाप्तकलोन्नितलिप्तः ॥ १७ ॥
१७ १४०

विधूच्चं ग्रहांशो गणाद्द्विलिप्तैः
स्वखाब्ध्याप्त्ययुक्वृन्दयुक्ता लवाद्यम् ।
४०
गणाङ्केन्दुभागो गणाद्द्व्यब्धिलब्ध-
१९ ४७
कलाढ्यो विशुद्धोऽर्कतश्चन्द्रपातः[2] ॥ १८ ॥

अथाह्नां गणो लोचनाभ्यां हतः स्यात्स्वभूयुग्मभागेन युक्तो लवाद्यः ।
२ २१
गणाद्रामभूभृद्धृतादाप्तलिप्तादिकेनान्वितो मेदिनीनन्दनोऽयम् ॥ १९ ॥
७३
अंशादिवेदाभ्यसनाद्बुधाशुतुङ्गत्वमायाति दिवागणोऽयम् ।
गणात्तथाङ्गाभ्यसनाल्लवेषु पञ्चाङ्गभक्तात्फलभागयुक्तः ॥ २० ॥
६ ६५
सद्गुरुतामुपयाति गणोऽयं भागमुखो रविसङ्गजनेन ।
१२
व्योममहीधरभक्तविहीनोऽप्याशुदिवागणतः कलिकासु ॥ २१ ॥
७०
द्विघ्नो गणः स्वीयरसांशहीनः शीघ्रं लवाद्यं भृगुजस्य तुङ्गम् ।
द्विघ्नाद्गणात्कग्निभिराप्तभागहीनं गणः खाग्निविहृच्छनिः स्यात् ॥ २२ ॥
३१ ३०
मध्यो लवाद्यो रसपञ्चभूभिः फलेन युक्तः कलिकासु वृन्दात् ।
१५६
भागाः खरामैर्विहृता गृहाणि चक्राणि तान्यर्कविभाजितानि ॥ २३ ॥
३० १२
गोक्षा अष्ट रवौ विधौ गतिकलाः खाङ्काद्रयोऽक्षाग्नयोऽ-
५९ ८ ७९० ३५

---

१ क. °तान्नित°। २ ऽर्कभाच्चन्द्र°।

ज्ञोच्चेऽङ्गानि कुसागरास्तपसि ता रामाः शिवा भूसुते ॥
६ ४१ ३ ११
भूरामा रसबाहवो बुधचलोच्चे पञ्चसिद्धा रदाः ।
३१ २६ २४५ ३२
ईज्ये पञ्च भृगूच्चके रसखगा नागाः शनौ द्वे कले ॥ २४ ॥
५ ९६ ८ २

ग्रहाणां गतयः ।

| र. | चं. | उ. | रा. | मं. | बु.उ. | गु. | शु.उ. | श. |
|---|---|---|---|---|---|---|---|---|
| ५९ | ७९० | ६ | ३ | ३१ | २४५ | ५ | ९६ | २ |
| ८ | ३५ | ४१ | ११ | २६ | ३२ | ० | ८ | ० |

द्युगणजनितखेटः क्षेपयुक्तो निरक्षे
क्षितिजनिकटसूर्ये मध्यमे मध्यमश्च ।
उदयरविफलाभ्यां स्पष्टसूर्योदयेऽसौ
द्विविधविषयजाभ्यां संस्कृतः स्वीयदेशे ॥ २५ ॥

यो मध्यात्स्फुटतोऽयनान्वितरवेर्भागाङ्गभागश्च या ।
६
नाड्यः स्वोदयकैस्तदन्तरहता भुक्तिर्विलिप्ताः खगे ॥
स्वर्णं चौदयिकेऽयनान्वितरवौ मध्ये तुलाजादिगे ।
तन्त्राद्बाहुचरोदयान्तरभवं कर्म ग्रहाणामिदम् ॥ २६ ॥

पुरान्तरं व्यङ्घ्रि पलानि दद्यात्स्वर्णं द्युसंघे परपूर्वसंस्थे ।
रेखा पुरात्स्वीयपुरे विधेया दिवागणान्मध्यखगास्ततश्च ॥ २७ ॥

फलचतुष्टयतस्त्विति संस्कृता द्युगतयोऽर्कमुखा यदि मध्यमाः ।
अभिमते समये परिचालयेन्मृदुजवेन ततः स्फुटतोक्तवत् ॥ २८ ॥

इति श्रीमन्महादेवदैवज्ञात्मजकृष्णदैवज्ञविरचिते करणकौस्तुभे
मध्यमग्रहसाधनाधिकारः प्रथमः ॥

---

१ ख. °ग्रहानयना°।

## द्वितीयोऽधिकारः ।

नागाद्रयोऽर्कस्य लवा मृदूच्चं भौमादिकानां मृदुतुङ्गभागाः ॥
७८
खाग्नीन्दवः काकृतयो यमाद्रिचन्द्राः खनागा नगवह्निपक्षाः ॥ १ ॥
१३० २२१ १७२ ८० २३७
दिविचरोनमृदुद्रुततुङ्गकं भवति केन्द्रमिदं च तदाह्वयम् ।
क्रियतुलादिगषड्भगकेन्द्रके धनमृणं मृदुशीघ्रफलं च तत् ॥ २ ॥

ऋयल्पं भुजस्तदधिकेन विहीनषड्भं
षड्भाधिकं विगतषड्भमतो नवोर्ध्वम् ।
चक्रच्युतं भवति दोरहितं त्रिभं स्या-
त्कोटिस्त्रिभं पदमितिर्भगणे युगानि ॥ ३ ॥

ग्रहाणां मन्दोच्चानि ।

| र. | मं. | बु. | गु. | शु. | श. |
|---|---|---|---|---|---|
| २ | ४ | ७ | ५ | २ | ७ |
| १८ | १० | ११ | २२ | २० | २७ |
| ० | ० | ० | ० | ० | ० |
| ० | ० | ० | ० | ० | ० |

चतुर्धोत्कृतयस्त्रेधा तत्त्वानि द्वियुगाश्विनः ।
२६ २५ २४
त्रिपक्षा द्विर्द्विपक्षाश्च स्वर्गाश्चातिधृतिर्द्विधा ॥ ४ ॥
२३ २२ २१ १९
धृत्योऽत्यष्टिर्नृपास्तिथ्यो मन्वर्केशा दिशो नव ।
१८ १७ १६ १५ १४ १२ ११ १० ९
वस्वङ्गेष्वग्निपक्षैकाः क्रमज्याखण्डकानि हि ॥ ५ ॥
८ ६ ५ ३ २ १

## क्रमज्याखण्डानि

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| क्रमज्या | ० | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ |
| खण्डानि | ० | २६ | २६ | २६ | २६ | २५ | २५ | २५ | २४ |
| खण्डयोगाः | ० | २६ | ५२ | ७८ | १०४ | १२९ | १५४ | १७९ | २०३ |

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| क्रमज्या | ९ | १० | ११ | १२ | १३ | १४ | १५ | १६ |
| खण्डानि | २४ | २३ | २२ | २२ | २१ | १९ | १९ | १८ |
| खण्डयोगाः | २२७ | २५० | २७२ | २९४ | ३१५ | ३३४ | ३५३ | ३७१ |

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| क्रमज्या | १७ | १८ | १९ | २० | २१ | २२ | २३ | २४ |
| खण्डानि | १७ | १६ | १५ | १४ | १२ | ११ | १० | ९ |
| खण्डयोगाः | ३८८ | ४०४ | ४१९ | ४३३ | ४४५ | ४५६ | ४६६ | ४७५ |

| | | | | | | |
|---|---|---|---|---|---|---|
| क्रमज्या | २५ | २६ | २७ | २८ | २९ | ३० |
| खण्डानि | ८ | ६ | ५ | ३ | २ | १ |
| खण्डयोगाः | ४८३ | ४८९ | ४९४ | ४९७ | ४९९ | ५०० |

बाह्वंशत्रिलवोन्मितार्धकयुतिः शेषघ्नभोग्यार्धतो
रामैर्लब्धसमन्विता दशहृता मौर्वी क्रमात्स्यात्स्फुटा ।
दिग्घ्नात्प्रोज्यगुणाद्दलान्यगतहृन्त्रिघ्नावशेषान्विता
३
त्रिघ्नी शुद्धदलोन्मितिश्च भवति स्पष्टं क्रमात्कार्मुकम् ॥ ६ ॥

षट्दस्रा द्विशरा गजाद्रय उदध्याशा नवार्का चतु-
२६ ५२ ७८ १०४ १२९
स्तिथ्योऽङ्काद्रिभुवो गुणाभ्रयुगला भद्वौ खतत्त्वानि च ।
१५४ १७९ २०३ २२७ २५०
द्व्यृक्षाण्यब्धिनवाश्विनस्तिथिगुणा वेदामरा ज्याशुग-
२७२ २९४ ३१५ ३३४
त्रीण्येकाद्रिगुणा द्विपद्विपगुणा वेदखवेदाः क्रमात् ॥ ७ ॥
३५३ ३७१ ३८८ ४०४
नन्दक्षोणिकृताः सुराब्धय इषुश्रुत्यब्धयोऽङ्गाशुग-
४१९ ४३३ ४४५

श्रुत्योऽङ्गर्तुकृताः शराद्रिनिगमा रामाष्टपाथोधयः ।
४५६ ४६६ ४७५ ४८३
नन्दाष्टश्रुतयः कृताङ्कनिगमाः सप्ताङ्कवेदास्तथा
४८९ ४९४ ४९७
गोतानानि खखेषवो निगदिता ज्याखण्डयोगा इमे ॥ ८ ॥*
४९९ ५००

व्यस्तैः खण्डैरुत्क्रमज्या धनुश्च
त्विष्टार्केन्द्रोर्मन्दकेन्द्रस्य बाहोः ।
जीवा साध्या त्र्यक्षिभिर्व्योमसोमै-
२३ १०
र्भक्तांशाद्यं दोःफलं लिप्तिकासु ॥ ९ ॥

उत्क्रमज्याः

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| उत्क्रमज्या- | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ |
| खण्डानि | १ | २ | ३ | ५ | ६ | ८ | ९ | १० |
| खण्डयोगाः | १ | ३ | ६ | ११ | १७ | २५ | ३४ | ४४ |
| उत्क्रमज्या- | ९ | १० | ११ | १२ | १३ | १४ | १५ | १६ |
| खण्डानि | ११ | १२ | १४ | १५ | १६ | १७ | १८ | १९ |
| खण्डयोगाः | ५५ | ६७ | ८१ | ९६ | ११२ | १२९ | १४७ | १६६ |
| उत्क्रमज्या- | १७ | १८ | १९ | २० | २१ | २२ | २३ | २४ |
| खण्डानि | १९ | २१ | २२ | २२ | २३ | २४ | २४ | २५ |
| खण्डयोगाः | १८५ | २०६ | २२८ | २५० | २७३ | २९७ | ३२१ | ३४६ |
| उत्क्रमज्या- | २५ | २६ | २७ | २८ | २९ | ३० | | |
| खण्डानि | २५ | २५ | २६ | २६ | २६ | २६ | | |
| खण्डयोगाः | ३७१ | ३९६ | ४२२ | ४४८ | ४७४ | ५०० | | |

**स्वार्धेनाऽऽढ्यं शीतगोः संस्कृतौ स्तस्ताभ्यां स्पष्टौ संस्कृतार्केण केतू ।**
**मान्देनैव स्यात्स्फुटत्वं तयोश्च तद्वत्योर्यश्च तयोः शीघ्रतुङ्गं ॥ १० ॥**

---

* सप्तमाष्टमश्लोकौ ख. पुस्तक एव दृश्येते ।

कोटिज्यका केन्द्रभवा निजार्धयुक्ता रवेश्चेद्रदहृत्फलं स्यात् ।
३२
विधोः स्वसूर्यांशवियुक्कुलीरनक्रादिकेन्द्रे स्वमृणं गतौ तत् ॥ ११ ॥
१२
खपञ्चवेदोनशकः खषड्भिर्भक्तोऽयनांशाः स्युरथायनांशान् ।
४५०  ६०
दत्त्वा खगे क्रान्तिचरेष्टकालान्दृग्लग्नपातान्वलनं च कुर्यात् ॥ १२ ॥
दिनार्धप्रभा सायनेऽर्के क्रियादौ पलाख्यप्रभा शङ्कुजा त्रिस्थिता सा ।
हता पङ्क्तिमातङ्गदिग्भिः क्रमेण हृताऽन्त्या त्रिभिः स्युश्चरार्धानि तानि ॥ १३ ॥
१०  ८  १०
सायनसूर्यभुजर्क्षदलैक्यं[1] भोग्यहतांशखलोकलवाढ्यम् ।
३०
स्यात्स्वमृणं च चरं रसभेऽर्के तौलयजगे विपरीतमथास्ते ॥ १४ ॥
तीक्ष्णकरा युतशीतकरांशा लब्धमितास्तिथयो रविभक्ताः ।
शेषमितं हरशुद्धमयातं तद्विकला घटिका गतगम्याः ॥ १५ ॥
भुक्तिवियोगहृता द्विगुणास्ताः पूर्वदले तिथयो नगतष्टाः ।
७
स्यात्करणं कुयुतं त्वपरेऽर्धात्[2]कृष्णमनोः परतः शकुनेः स्युः ॥ १६ ॥
इन्दोः सार्कविधोः कलाः खखगजैर्भक्ता भयोगौ गतौ ।
८००
यातैष्ये कुरु पूर्ववद्विकलिका भुक्त्या जवैक्येन च ॥
भक्ताः स्युः क्रमशो गतैष्यघटिका नक्षत्रयुत्योस्तिथिः ।
वारो भं च[3] तथैव योगकरणं पञ्चागमेवं स्फुटम् ॥ १७ ॥

इति श्रीमन्महादेवदैवज्ञात्मजकृष्णदैवज्ञविरचिते करणकौस्तुभे[4]
सूर्यचन्द्रस्पष्टीकरणाधिकारो द्वितीयः ॥



१ क. °क्षसमैक्यं । २ ख. °रेऽर्धे कृ° । ३ ख. च युतिस्तथैव क° । ४ ख. °भे पञ्चाङ्गा-यनाधि° ।

## तृतीयोऽधिकारः ।

खं भूपा दशनाः कुजे नगकृता द्व्यङ्गानि सप्ताद्रयो ।
० १६　३२　४७　६२　७७
द्व्यङ्काः षट्कदिशोऽङ्कशंभव इलाविश्वे द्विवेदेन्दवः ॥
९२　१०६　११९　१३१　१४२
भूतिथ्योऽष्टशरेन्दवः कुषडिला मातङ्गपञ्चेन्दवः ।
१५१　१५८　१६१　१५८
षट्शक्रा नवशंकराः खगिरयः खं स्युश्चलाङ्का इमे ॥ १ ॥
१४६　११९　७०　०

नभोऽवनिभुवो दिवोऽथ दशनाः कराम्भोधयः ।
०　११　२१　३२　४२
कुपञ्च खषडष्टषट् शरनगा अशीतिर्बुधे ॥
५१　६०　६८　७५　८०
युगाष्टषडिभाः शराष्टकुगजास्त्रिशैलाः खषट् ।
८४　८६　८५　८१　७३　६०
भवन्ति कृतवार्धयो गुणकराश्चलाङ्का नभः ॥ २ ॥
४४　२३　०

खं षड् विश्वे खचरशशिनस्तत्त्वसंख्याः कुरामाः ।
० ६　१३　१९　२५　३१
षण्णां वर्गोऽम्बरजलधयस्त्र्यब्धयोऽक्षाब्धयश्च ॥
३६　४०　४३　४५
षड्वेदा द्विगुणजलधयोऽभ्राब्धयोऽब्ध्यग्नयश्च ।
४६　४३　४०　३४
भान्यङ्कैका दश नभ इमे वाक्पतेः स्युश्चलाङ्काः ॥ ३ ॥
२७ १९ १० ०

व्योमात्यष्टिश्चलाङ्का जलधिगुणमिताः खेषवः सप्तषट्काः ।
०　१७　३४　५०　६७
त्र्यष्टाङ्काङ्का युगेशा नवकरशशिनोऽग्नीन्द्रकाः सप्ततिथ्यः ॥
८३　९९　११४　१२९　१४३　१५७

नागाङ्कैका गजात्यष्टय उदधिगजैकाः शराष्टेन्दवश्च ।

१६८ १७८ १८४ १८५

सप्ताद्रिक्ष्मा द्वितिथ्यस्त्रिनवपरिमिता भार्गवे खं भवन्ति ॥ ४ ॥

१७७ १५२ ९३ ०

शीघ्राङ्काः खं वेदनागेशतिथ्यो धृत्यः स्वर्गास्त्र्यश्विनोऽथो चतुर्धा ।

० ४ ८ ११ १५ १८ २१ २३

तत्त्वानि स्युस्त्र्यश्विनः स्वर्धृतिश्च शक्राः काष्ठाः पञ्च खं भानुसूनोः ॥

२५ २३ २१ १८ १४ १० ५ ०

## भौमादीनां शीघ्राङ्काः ।

| अङ्काः | ० | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ |
|---|---|---|---|---|---|---|---|---|---|---|
| भौ. शी. | ० | १६ | ३२ | ४७ | ६२ | ७७ | ९२ | १०६ | ११९ | १३१ |
| बु. शी. | ० | ११ | २१ | ३२ | ४२ | ५१ | ६० | ६८ | ७५ | ८० |
| गु. शी. | ० | ६ | १३ | १९ | २५ | ३१ | ३६ | ४० | ४३ | ४५ |
| शु. शी. | ० | १७ | ३४ | ५० | ६७ | ८३ | ९९ | ११४ | १२९ | १४३ |
| श. शी. | ० | ४ | ८ | ११ | १५ | १८ | २१ | २३ | २५ | २५ |

| अङ्काः | १० | ११ | १२ | १३ | १४ | १५ | १६ | १७ | १८ |
|---|---|---|---|---|---|---|---|---|---|
| भौ. शी. | १४२ | १५१ | १५८ | १६१ | १५८ | १४६ | ११९ | ७० | ० |
| बु. शी. | ८४ | ८६ | ८५ | ८१ | ७३ | ६० | ४४ | २३ | ० |
| गु. शी. | ४६ | ४६ | ४३ | ४० | ३४ | २७ | १९ | १० | ० |
| शु. शी. | १५७ | १६८ | १७८ | १८४ | १८५ | १७७ | १५२ | ९३ | ० |
| श. शी. | २५ | २५ | २३ | २१ | १८ | १४ | १० | ५ | ० |

अङ्घ्रिर्द्विधाऽर्धं शरधाऽङ्घ्रिरस्य दलं कुजेऽङ्कत्रितयेऽन्तिमैष्ये ।

। ॥ ।

शेषांशके षोडशके भृगौ वाऽत्यष्टौ दलं रूपकमङ्घ्रियुग्भूः ॥ ६ ॥

॥ १ १।

सार्धं रूपं स्याच्चतुर्धाऽङ्घ्रियुक्तं रूपं रूपं भार्गवेऽष्टादशे तु ।

१॥ १। १

एकः साङ्घ्रिः सार्धकः सार्धकश्च साङ्घ्रिः साङ्घ्रिः केवलोऽर्धं तदर्धम् ।

१ १। १॥ १॥ १। १। १ ॥ ।

भौमशुक्रयोः शेषाङ्काः ।

| | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ |
|---|---|---|---|---|---|---|---|---|---|
| भौमषोडशसप्तद-शाष्टादशसु शे०ङ्काः | ० | ० | ० | ० | ० | ० | ० | ० | ० |
| | १५ | १५ | ३० | ३० | ३० | ३० | ३० | १५ | ७ |
| | | | | | | | | | ३० |
| शुक्रषोडशसप्त-दशसु | ० | १ | १ | १ | १ | १ | १ | १ | १ |
| | ३० | ० | १५ | ३० | ३० | ३० | ३० | १५ | ० |
| अष्टादशसु शे० ङ्काः | १ | १ | १ | १ | १ | १ | १ | ० | ० |
| | ० | १५ | ३० | ३० | १५ | १५ | ० | ३० | १५ |

भौमात्कर्णा दिग्लवैः पक्षनागाः कष्टौ खाष्टा अष्टशैलाः शरागाः ।
८२ ८१ ८० ७८ ७५
द्व्यश्वा मातङ्गर्तवो वेदषट्काः षष्टिः पञ्चाक्षास्तथा नन्दवेदाः॥८॥
७२ ६८ ६४ ६० ५५ ४९
युगाब्धयो नागगुणा द्विरामा भान्यब्धिपक्षा गविला धृतिश्च ।
४४ ३८ ३२ २७ २४ १९ १८
बुधे गजाङ्गानि महीध्रषट्कास्तथाङ्गषट्काश्च पृषत्कषट्काः ॥९॥
६८ ६७ ६६ ६५
त्रितर्काः कुतर्का गजाक्षा रसाक्षा गुणाक्षाश्च खाक्षास्तथा शैलवेदाः।
६३ ६१ ५८ ५६ ५३ ५० ४७
तथा वेदवेदाः कुवेदा इभाग्नी रसाग्न्यब्धिरामास्त्रिरामा रदाश्च ॥ १० ॥
४४ ४१ ३८ ३६ ३४ ३३ ३२
अथोऽङ्काश्च देवेन्द्रपूज्ये खतर्का नवाक्षा गजाक्षा नगाक्षा रसाक्षाः ।
६० ५९ ५८ ५७ ५६
शराक्षा युगाक्षा गुणाक्षा इलाक्षास्तथा नन्दवेदास्तथा शैलवेदाः ॥११॥
५५ ५४ ५३ ५१ ४९ ४७
तथा बाणवेदास्तथा वेदवेदास्त्रिवेदा द्विवेदाः कुवेदाः खवेदाः ।
४५ ४४ ४३ ४२ ४१ ४०

१ ख. °क्षाः स्वराक्षा ।

खवेदास्ततो[1] भार्गवे तर्कनागाः शराष्टौ गुणाष्टौ महीभा इभागाः॥ १२॥
४० ८६ ८५ ८३ ८१ ७८
शरागाः कुशैला नगाङ्कं द्विषट्कास्तथा षट्शरा भूशराः पञ्चवेदाः ।
७५ ७१ ६७ ६२ ५६ ५१ ४५
तथा नागरामा रदा उत्कृतिश्च नखाः षड्भुवो वेदचन्द्रा अथाऽर्केः॥ १३ ॥
३८ ३२ २६ २० १६ १४
शराक्षाः शराक्षा युगाक्षा युगाक्षा गुणाक्षा यमाक्षा यमाक्षाः कुबाणाः ।
५५ ५५ ५४ ५४ ५३ ५२ ५२ ५१
खबाणा द्विधाऽङ्काब्धयोऽष्टाब्धयोऽद्रिकृताः षट्कृताः पञ्चवेदाश्चतुर्धा ॥ १४॥
५० ४९ ४८ ४७ ४६ ४५

भौमादीनां कर्णाङ्काः ।

| अङ्काः | ० | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ |
|---|---|---|---|---|---|---|---|---|---|---|
| भौ. कर्णाः | ० | ८२ | ८१ | ८० | ७८ | ७५ | ७२ | ६८ | ६४ | ६० |
| बु. कर्णाः | ० | ६८ | ६७ | ६६ | ६५ | ६३ | ६१ | ५८ | ५६ | ५३ |
| गु. कर्णाः | ० | ६० | ५९ | ५८ | ५७ | ५६ | ५५ | ५४ | ५३ | ५१ |
| शु. कर्णाः | ० | ८६ | ८५ | ८३ | ८१ | ७८ | ७५ | ७१ | ६७ | ६२ |
| श. कर्णाः | ० | ५५ | ५५ | ५४ | ५४ | ५३ | ५२ | ५२ | ५१ | ५० |

| अङ्काः | १० | ११ | १२ | १३ | १४ | १५ | १६ | १७ | १८ |
|---|---|---|---|---|---|---|---|---|---|
| भौ. कर्णाः | ५५ | ४९ | ४४ | ३८ | ३२ | २७ | २४ | १९ | १८ |
| बु. कर्णाः | ५० | ४७ | ४४ | ४१ | ३८ | ३६ | ३४ | ३३ | ३२ |
| गु. कर्णाः | ४९ | ४७ | ४५ | ४४ | ४३ | ४२ | ४१ | ४० | ४० |
| शु. कर्णाः | ५६ | ५१ | ४५ | ३८ | ३२ | २६ | २० | १६ | १४ |
| श. कर्णाः | ५० | ४९ | ४८ | ४७ | ४६ | ४५ | ४५ | ४५ | ४५ |

भौमादीनां शीघ्रकेन्द्रं रसोर्ध्वं चक्राच्छुद्धं[2] तल्लवा दिग्विभक्ताः ।
लब्धं याताङ्को गतैष्यान्तरघ्नाच्छेषाद्दिग्भिर्यत्फलं तद्युतोनः ॥ १५ ॥
गम्य इतादधिके यदि वोने शीघ्रफलं युगहृल्लवपूर्वम् ।
तत्कुरुतात्कुजपूर्वकखेटे प्रोक्तवदेवमपीह धनर्णम् ॥ १६ ॥
लोकाब्धिभिश्चन्द्रभवैरिभाङ्कैर्नागेभनेत्रैः शरषड्भिराप्ता ।
४३ १११ ९८ २८८ ६५

---

१ ख. °दास्त्वथो भा° । २ ख. °क्राच्छोध्यं त° ।

कुजाद्दशघ्नी मृदुकेन्द्रदोर्ज्या भागादि मान्दं स्वमृणं पुरेव ॥ १७ ॥

केन्द्र आद्यपदे चान्त्ये स्वीयविश्वांशकोनितम् ।
विबुधानां स्फुटं स्यात्तु फलं मान्दं लवादिकम् ॥ १८ ॥
द्रुतफलदलमादौ मध्यमे देयमस्मात् ।
मृदुफलमखिलं यन्मध्यमे तद्विधेयम् ॥
द्रुतमखिलममुष्माद्देहि मन्दस्फुटेऽसौ ।
स्फुटतर इति खेटो योऽसकृत्साधितोऽसौ ॥ १९ ॥

जीवैष्यखण्डं दशहृन्निजाङ्घ्रियुक्कुजाद्द्विनिघ्नं स्वगुणांशयुक्तम् ।
१० ३
सप्तद्विशक्रोद्धृतमाप्तलिप्ता मान्दं गतौ तत्स्वमृणं पुरेव ॥ २० ॥
७।२। १४
चलाङ्कान्तरं वेदहृद्भूमिपुत्रात्त्रिभिर्नागचन्द्रैर्हतं साधवेदैः ।
१८ ४। ३०
विपादाब्धिभिः पञ्चभिर्द्राक्फलं स्याद्गतेश्चश्चलाङ्कक्षयद्व्योस्तदूना ॥ २१ ॥
३। ४५
युता मृदुः स्फुटा गतिः प्रमाणिका स्फुटा भवेत् ।
यदा न शुध्यते तदा विलोमतस्तु वक्रता ॥ २२ ॥

भौमादीनां वक्रिताऽवक्रिता च द्राकेन्द्रांशैस्त्र्यङ्गभूमिः शरेन्द्रैः ।
१६३ १४५
बाणादित्यैः सप्तभूपैस्त्रिरुद्रैः स्पष्टैरेभिश्चक्रभागच्युतैः स्यात् * ॥ २३ ॥
१२५ १६७ ११३
इभाक्षिभिः शक्रसमैर्नगाब्जैः कुजेज्यपातङ्ग्युदयस्तु पूर्वे ।
२८ १४ १७
द्राकेन्द्रभागैः परमौढ्यमेभिः चक्रच्युतैर्भास्करगाग्रगास्ते × ॥ २४ ॥
खाक्षैर्जिनैः शरशरेन्दुभिरद्रिशैलचन्द्रैः परे शशिजशुक्रमहोदयास्तौ ।
५० २४ १५५ १७७
पूर्वे क्रमाच्छरनखैरनलाष्टचन्द्रैः व्योमावनीगुणमितै रसवह्निरामैः ॥ २५ ॥
२०५ १८३ ३१० ३३६

---

* ख. पुस्तके मं. १९५, बु. २१५, गु. २३५, शु. १९३, श. २४७ इति ।
× ख. पुस्तके मं. ३३२, गु. ३४६, श. ३४३ इति ।

वक्रावक्रामौढ्यमौढ्यांशतोंऽशाः पुष्टाश्चाल्पाः केन्द्रजा नन्दनिघ्नाः ।
भौमाद्भक्ता वेदपिण्डाष्टबाणैः यातायातान्यर्कजांशा दिनानि ॥ २६ ॥
४ २८ ८ ५
भौमोदयाद्दिक्कुकरदिग्युगैश्च कौटिल्यमार्गास्तमयोदयाः स्युः ।
१० २ १० ४
मासैः सुरेज्योदयतः सपादवेदैर्युगैः साङ्घ्रियुगैर्भुवा च ॥ २७ ॥
४। ४ ४। १
मन्दोदयाद्रामयुगाग्निभिश्च दलान्वितैः साङ्घ्रिभुवा क्रमेण ।
३ ४ ३ १।
परोदयाद्वक्रगतिः परास्तं पूर्वोदयो मार्ग इतोऽस्त ऐन्द्याम् ॥ २८ ॥
परोदयो ज्ञस्य दिनैरमीभिर्दन्ताग्निभूपाग्निरदैरदैश्च ॥
३२ ३ १६ ३ ३२ ३२
ततस्ततस्ते भृगुजस्य तद्वद्वक्रादयः स्युर्दिवसैरमीभिः ॥ २९ ॥
खवेदपक्षैस्त्रियमैर्गजैश्च त्रिलोचनैः खाग्नियमैः खशैलैः ॥
२४० २३ ८ २३ २३० ७०
स्थूलं यतोऽस्माज्झटिति प्रबोधः संसत्सु वक्ष्येऽग्रत एव सूक्ष्मम् ॥ ३० ॥

इति श्रीमन्महादेवदैवज्ञात्मजश्रीकृष्णदैवज्ञविरचिते करण-
कौस्तुभे पञ्चतारास्पष्टीकरणाधिकारस्तृतीयः ॥



## चतुर्थोऽधिकारः ।

लङ्कायां भवनोदयास्त इभभान्यङ्काङ्कदस्राः क्रमा-
२७८ २९९
दाज्याशद्वयवह्नयो विघटिकाः स्थाप्याः क्रमाद्व्युत्क्रमात् ॥
३२३
हीनाढ्याः क्रमगोत्क्रमैश्चरदलैर्मेषान्निजा व्युत्क्रमा-
ज्जूकात्तेऽप्यथ चेष्टकालजरवे युक्तायनांशस्य ये ॥ १ ॥
भोग्यांशाः स्वोदयघ्ना गगनगुणहृता भोग्यकालस्तथैव ।
३०
यातांशैर्यातकालोऽप्यभिमतघटिकानां पलेभ्यो विशोध्यः ॥
भोग्यैः शोध्यस्तदग्र्योदय इति च पुनः शेषमभ्राग्निनिघ्नम् ।
३०
शुद्धाग्रेणोद्धृतं तल्लवमुखमजतः शुद्धभैर्योजितं स्यात् ॥ २ ॥
लग्नमदोऽयनभागविहीनं चेन्न विशुध्यति चेष्टत एष्यः ।
खाग्निगुणान्निजभोदयभक्ताल्लब्धलवैरुदयो रविराढ्यः ॥ ३ ॥
३०
रवेर्भोग्यकालेन लग्नेन कालो युतः स्यादभीष्टोऽन्तरस्थोदयाढ्यः ।
तनूभास्करावेकराशौ तदंशान्तरघ्नोदयः खाग्निहृच्चेदभीष्टः ॥ ४ ॥
३०
इनादूनलग्ने द्युरात्रात्स शोध्यः स चेद्रात्रिलग्नं सषड्भार्कतः स्यात् ।
इनात्पूर्वलग्नं विलोमप्रकारात्प्रसाध्यं तथाऽभीष्टकालोऽपि तज्ज्ञैः ॥५॥
यच्चक्रखण्डं प्रथमं स सौम्यो गोलः परार्धं कथितः स याम्यः ।
सौम्यायनं तद्रसभं मृगाद्यद्याम्यं कुलीरात्खचरोऽत्र तस्य ॥ ६ ॥
उदगनुत्तरगोलगते रवौ चरपलैर्युतहीनितनाडिकाः ।
तिथिमिता द्युदलं द्विगुणं दिनं खरसशुद्धमिदं रजनीमितिः ॥ ७ ॥
१५ ६०

---

१ ख. °ग्यः कालस्त° ।

## क्रान्तिखण्डानि क्रान्तियोगाश्च

| | | | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| | ० | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ | १५ |
| क्रान्तिख० | ० | २ | २ | २ | २ | २ | २ | १ | १ | १ | १ | १ | ० | ० | ० | ० |
| | | २७ | २५ | २१ | १८ | १३ | ५ | ५९ | ४९ | ३६ | २४ | ११ | ५७ | ४० | २३ | ११ |
| खण्डयोगाः | ० | २ | ४ | ७ | ९ | ११ | १३ | १५ | १७ | १९ | २० | २१ | २२ | २३ | २३ | २३ |
| | | २७ | ५२ | १३ | ३१ | ४४ | ४९ | ४८ | ३७ | १३ | ३७ | ४८ | ४५ | २५ | ४८ | ५९ |

प्रभाकराक्षभाकृती तयोर्युतेः पदं श्रुतिः ।
पलाभिधा प्रमाणिका पलप्रभाऽभ्रसायकैः ॥ ८ ॥
५०
हता पलश्रवोद्धृता पलज्यका धनुस्तथा ।
पलांशकाः खमध्यतोऽनुदग्दिशोऽनुदक्स्थिताः ॥ ९ ॥
लम्बाभिधाः खनन्देभ्यो विशुद्धास्ते सदोत्तराः ।
९०
लम्बज्यका तदीया या दोर्ज्यका साऽत्र कथ्यते ॥ १० ॥
षोढा द्वौ जगती तथेन्द्रियविधा खं वेदधाऽधो नगा-
६ २ १ ५ ० ४ २७
क्षीण्यक्षाक्षिमहीयमा गजभुवो विश्वे शरा गोशराः ॥
२५ २१ १८ १३ ५ ५९
गोवेदा रसपावकाः कृतयमा रुद्रा नगाक्षा वियत्-
४९ ३६ २४ ११ ५७ ४०
वेदास्त्र्यक्षिशिवा दलान्यपमजान्येभ्यः प्रसाध्योऽपमः ॥ ११ ॥
२३ ११
सायनग्रहभुजांशका रसैर्भाजिता गतदलानि तद्युतिः ।
६
भोग्यशेषहतितो रसाप्तियुक्खेटदिग्लवमुखोऽपमो भवेत् ॥ १२ ॥
६ १०°
क्रान्त्यक्षसंस्कारलवा नताः स्युः खाङ्कच्युताश्चोन्नतजा दिनार्धे ।
९०
मध्योन्नतांशक्रममौर्विकाप्तं व्योमाभ्रषट्कं श्रवणो दिनार्धे ॥ १३ ॥
६००
क्रान्तिज्यका नखलवोत्थितवर्गहीनैः
२०
सूर्यैर्हता पलभया गुणिताऽपमज्या।
१२
स्यात्सिञ्जिनी चरभवा दशसंगुणं य-
त्तत्कार्मुकं भवति सूक्ष्मतरं चरं वा ॥ १४ ॥

---

१ ग. °स्ततः ।

हिमकरप्रमुखेष्विषुसंस्कृताऽपमगुणाच्चरमुक्तवदानयेत् ।
इति भतोऽपि तथा दिनरात्रिके त्विह विशेषमलं ब्रुवतेऽपरे ॥ १५ ॥
गगनगास्थितभोदयसंगुणा निजगतिः खखनागकुहृत्पलैः ।
१८००
गगनषड्घटिकाः सहितास्ततो दलमहस्त्विदमन्वितमूनितम् ।
६०
चरपलैर्द्विगुणैः खलु गोलयोरिति विलोमविधौ रजनीमिति ॥ १६ ॥

इदं गाथाछन्दः ।

अतीतो भवेत्काल ऐन्द्र्यां परत्रावशेषोऽपि पूर्वं परं चोन्नतं स्यात् ।
भवेदुन्नतेनोनितं तन्नतं स्याद्दिनार्धे नतादुन्नतं वाऽन्यथाऽतः ॥ १७ ॥
उदग्याम्यगोले चरज्यान्वितो ना त्रिजीवाद्यसंज्ञो रसघ्नान्नतास्सः ।
६
विलोमज्यकोनो भवेच्चेष्टसंज्ञो दिनार्धश्रुतिस्त्विष्टभक्ताद्यनिघ्नी ॥ १८ ॥
अभीष्टश्रवोऽप्यस्य वर्गाद्युगेन्द्रैर्विहीनात्पदं सेष्टभाभीष्टकाले ।
१४४
भवेदङ्गुलाद्याङ्गुलं शङ्कुसूर्यलवोऽभीष्टभावर्गतः सार्कवर्गात् ॥ १९ ॥
१४४
पदं चेष्टकर्णो भवेदाद्यनिघ्नी दिनार्धश्रुतिस्तेन भक्तेष्टसंज्ञः ।
अथेष्टोनिताद्याद्विलोमं धनुर्यत्तदाप्तं रसैर्नाडिकाद्यं नतं स्यात् ॥ २० ॥

नतं तिथ्यधिकं चेत्स्यात्तिथ्यूननतजीवया ।
युता त्रिज्या नतस्येयं विलोमज्या भवेत्तदा ॥ २१ ॥

क्रान्त्यक्षसंस्कारविहीनखाङ्काः समुन्नता यन्त्रलवा दिनार्धे ।
९०
यन्त्रांशमौर्वी गुणिता खबाणैर्दिनार्धयन्त्रांशगुणोद्धृताऽस्याः ॥ २२ ॥
५०
चापांशकैः संगुणिताद्द्युखण्डात्खाङ्कोद्धृतादुन्नतनाडिकाः स्युः ।
खनन्दाहता नाडिका चोन्नता या दिनार्धोद्धृता लब्धमौर्वी विनिघ्नी ।
९०
द्युखण्डोत्थयन्त्रांशमौर्व्या खबाणैर्हृता लब्धकोदण्डतो यन्त्रभागाः॥२३॥
५०

खखषट्प्रभाश्रुतिहृतास्तु ततो भुजभागका इह तुरीयलवाः ।
६००
अथवाऽत्र यन्त्रलवमौर्विकया खखषट्हृता श्रुतिरतोऽपि रुचिः ॥ २४ ॥
६००

जलसमभुवि वृत्तस्यैव केन्द्रस्थशङ्को-
विंशति सरति भाग्रं तत्र चिह्ने परैन्द्र्यौ ।
तदुपरिगतसूत्रस्यार्धमुल्लङ्घ्य साध्ये
वृतितिमिमुखपुच्छे सूत्रमन्ये दिशौ स्तः ॥ २५ ॥

वार्कापमज्यागुणितेऽष्टकर्णो लम्बज्ययाऽऽप्तः सभुजोऽर्कदिक् स्यात् ।
याम्याक्षभासंस्कृत एवमत्र भुजेष्टभावर्गवियोगमूलम् ॥ २६ ॥
कोटिः शलाके भुजकोटिसंख्ये भाग्रान्नृकेन्द्राच्च तथा निवेश्ये ।
यष्ट्यग्रयोगो वरुणेन्द्रकाष्ठे कोटिस्ततोऽन्ये तिमितो भुजो वा ॥ २७ ॥
स्पष्टा क्रान्तिः खेटतः क्रान्तितश्च बाहुं कोटिं साधयित्वा दिशश्च ।
दद्याद्धीमान्केन्द्रतः पूर्वतोऽत्र कोटिं खेटे प्राक्कपाले परस्याम् ॥ २८ ॥
प्रत्यक्संस्थश्चेत्तदग्रात्स्वदिक्स्थं बाहुं छायां बाहुकेन्द्रान्तराले ।
बाहुच्छायायोगसंस्थं नरं तं कृत्वा बिन्दोः सूत्रमेकं प्रसार्य ॥ २९ ॥
शङ्कोरग्रे तद्यथा स्यान्नले च वंशाधारे सुस्थिरे कोटिमन्ये ।
प्रत्यक्खेटे पूर्वगां पूर्वगेऽत्र प्रत्यक्संस्थां भाग्रतः सूत्रबाहू ॥ ३० ॥
तत्सूत्रदृष्ट्या नलिकैकरन्ध्रात्संदर्शयेत्खे खचरं विधिज्ञः ।
दिवैव पूर्वं विरचय्य सर्वं दृक्शास्त्रसाम्यप्रतिपादनार्थम् ॥ ३१ ॥
तथैव सर्वं परिसाध्य देयं कोट्यादि वामं शुचिभाण्डगं कम् ।
संस्थाप्य केन्द्रे प्रतिबिम्बितं के खेटं प्रपश्येन्नलके विसूत्रे ॥ ३२ ॥

इति श्रीमन्महादेवदैवज्ञात्मजकृष्णदैवज्ञविरचिते करण-
कौस्तुभे त्रिप्रश्नाधिकारश्चतुर्थः ॥ ४ ॥

---

१ रक °व सर्वं° ।

## पञ्चमोऽधिकारः ।

रविविधुग्रहमादरतोऽधुना गणितशास्त्रसमर्थनहेतवे ।
मुनिवरैर्हितदत्तफलं बहु गदितमत्र चमत्कृतितो ब्रुवे ॥ १ ॥
खगजवाद्गतगम्यदिनाहतात्खरसलब्धलवै रहितो युतः ।
६०
भवति तत्समयोत्थखगस्तथा घटिकयेति कलादि विहीनयुक् ॥ २॥
पर्वान्त एवं रविराहुचन्द्रान्संचाल्य राहूनरवेर्भुजांशैः ।
इन्द्राल्पकैः स्याद्ग्रहसंभवोऽत्र याम्यैर्गजोनैरपि चेद्रवेस्तु ॥ ३ ॥
८
पक्षेऽथवाऽङ्कै रविभिश्च मासैः पक्षोनितैः पक्षयुतैश्च तैर्वा ।
९ १२
व्यगोर्भुजांशैर्ग्रहसंभवस्तं विलोक्य धीमान्गणितं विदध्यात् ॥ ४ ॥
पक्षभवं चलनं व्यगुसूर्ये खं तिथयः खयमा गृहपूर्वम् ।
० १५ २०
स्याद्रसमासभवं तु तथैव षण्निगमा जगती कथितं ज्ञैः ॥ ५ ॥
६ ६ ४ १
सूर्यगती रसहृद्रविबिम्बं स्वीयदशांशयुगङ्गुलपूर्वम् ।
६
वेदनगैर्विहृता विधुबिम्बं भुक्तिकलाः शशिनोऽङ्गुलपूर्वम् ॥ ६ ॥
७४
इन्दुगतिः पृथिवीद्युतिबिम्बमाकृतिहृत्स्वखशैललवोनम् ।
२२ ७०
भास्करभुक्तिनगाप्तिविहीनं केचन राहुतनुं प्रवदन्ति ॥ ७ ॥
७
शीतकरं तिमिरं तु पिधत्ते तीक्ष्णकरं च निशाकरमूर्तिः ।
यत्तु पिधानपिधेयदलैक्यं मानदलैक्यमिदं विशरं तत् ॥ ८ ॥
स्यात्स्थगितं तु पिधेयवियुक्तं खग्रहणं गदितं परिशेषम् ।
प्राक्परतस्तु विधोर्मुखमोक्षौ क्रान्तिवृतेस्तरणेर्विपरीतम् ॥ ९ ॥

---

१ ग. °म्बं स्वेशलवान्वितमङ्गु°। २ ख. ग. °त्तु पिधेयविधान° ।

व्यग्विन्दुदोर्ज्या स्वादिगंशहीना द्विघ्न्यङ्गुलाद्यो विशिखो विधोः स्यात् ।
१०
रामाहतोऽसौ कलिकादिको वा विराहुशीतद्युतिगोलदिक्कः ॥ १० ॥
३
युग्मे पदे मध्यशरस्य योगात्स्थित्यग्निभागेन तथाऽन्तराच्च ।
ओजे विलोमं ग्रहमुक्तिबाणौ चन्द्रग्रहे ते विपरीतदिक्काः ॥ ११ ॥
मानैक्यखण्डशरवर्गवियोगमूलं त्रिघ्नं जवान्तरलवैर्विहृतं स्थितिः सा ।
नाडीमुखा भवति मर्दमितिस्तथाऽत्र मानान्तरार्धविशिखादथ या स्थितिस्तु ॥
निजनिजाङ्घ्रियुतेषु पलैर्युता विरहिता मुखमुक्तिभवेत्स्थितिः ।
व्यगुविधौ विषमे तु पदेऽन्यथा समपदे स्थितिवत्कुरु मर्दके ॥ १३ ॥
पर्वावसानं ग्रहमध्यकालो वियुग्युतः स्पर्शविमुक्तिकालौ ।
निजास्थितिभ्यां निजमर्दकाभ्यां संमीलनोन्मीलनके च वेद्ये ॥ १४ ॥
शेषे स्पर्शो दिनस्येन्दोर्याते मुक्तिस्तदूनितम् ।
द्युदलं तु रवे रात्रेस्तदूनितनिशादलम् ॥ १५ ॥
२
पूर्वापरं नतं चात्र वलनस्यात्र सिद्धये ।
ग्रस्तोदयास्तयोरेव ज्ञेयं गणितकोविदैः ॥ १६ ॥
खाङ्काहतं द्युदलहृन्नतमस्य मौर्वी
९०
स्पर्शादिकं पलहता त्रिभजीवयाऽऽप्ता ।
पूर्वापरे नत उदग्यमदिग्धिमांशोः
क्रान्तिस्त्रिभायनयुताद्व्यसंस्कृतेर्ज्या ॥ १७ ॥
खाक्षोद्धृता मानदलैक्यनिघ्नी स्पष्टाङ्गुलाद्या वलनस्य जीवा ।
५०
भित्तौ शिलायां सुसमे पटे वा ज्ञः पारिलेखं विलिखेद्रवीन्द्वोः ॥१८॥
मानैक्यखण्डमितकर्कटकेन वृत्तं
साध्यं पिधेयशकलेन तदन्तराले ।
दिङ्मुद्रितं प्रथमतो वलनस्य जीवे-
न्द्र्यां स्पार्शिकी भवति सव्यमसव्यमत्र ॥ १९ ॥
याम्योत्तरा यदि तु मोक्षभवा प्रतीच्यां
वामं रवेर्वलनजेति शरौ तदग्रात् ।

---

१ ग. ओजादिलो° । २ ग. °तं तच्च व° । ३ ग. जीवा प्राक्स्पा° ।

देयौ ज्यकावदथ मध्यशरौ यथाशः

केन्द्रात्तिमे[1]र्वलनचिह्न[2]भवस्य सूत्रे ॥ २० ॥

पुच्छाननगते देयः स्पर्शमध्ये विमुक्तिजे ।

शरत्रयगते चिह्ने वृत्तानां त्रितये शुभे ॥ २१ ॥

ग्राहकखण्डभवे ग्रहमध्यमुक्तिमितिस्त्वथ मध्यशराग्रात् ।

स्पर्शविमुक्तिशराग्रगरेखे प्रग्रहमुक्तिपथावथ केन्द्रात् ॥ २२ ॥

मानार्धविश्लेषभवा[3]वृतिर्या तद्वृत्तितन्मार्गयुतिद्वयेऽपि ।

ये छादकार्धप्रभवे वृती ते संमीलनोन्मीलनके च वेद्ये ॥ २३ ॥

छन्नहृताभिमतं स्थितिभक्तमङ्घ्रियुतं निगमावधि सैकम् ।

आगजमङ्घ्रिवियुक्कुयुगू[4]र्ध्वमिष्टपिधानमदः स्थितितो वा ॥ २४ ॥

८

रुद्रघ्नेतसमायुता मधुगतैर्मासैः पृथक्सेश्वराः

११

स्वाभ्राद्यंशयुतास्त्रिरामविहृता लब्धैर्युतास्तेऽधिकैः ।

७०

मासाः स्युर्गुणिता[5] भुवा च वि[6]यता खाम्भोधिभिः साङ्घ्रिभिः ।

१ ० ४० । १५

शुक्लान्ते भमुखौ व्यगुर्भवति भूखत्रिंशदेकान्वितः ॥ २५ ॥

१। ० । ३० । १

द्विगुणितभगणाद्यं व्यग्विनस्य प्रियुक्तं भवति शिखरितष्टं पर्वपो वर्तमानः ।

विधिशशिसुर[7]पेशस्वाम्बुपाग्न्यन्तकानां द्युगणवदधिमासस्याऽऽगमोऽप्यत्र वेद्यः ॥

धूम्रः कृष्णः कृष्णरक्तः पिशङ्गः पादैर्ग्रस्[8]तोऽब्जः सदाऽर्कस्तु कृष्णः ।

स्पष्टः प्रोक्तः स्पष्टतायै विधिज्ञप्रोक्त्याऽस्माभिः पारिलेखोऽन्यथाऽग्रे ॥२७॥

अर्कनृपांशरवीन्दुपिधानं दृग्विषयं न हि भानुविभावात् ।

दृग्गणितैक्यधियाऽखिलवच्च दत्तहुते विदधीत विधिज्ञः ॥ २८ ॥

इति श्रीमन्महादेवदैवज्ञात्मजकृष्णदैवज्ञविरचिते करणकौस्तुभे
चन्द्रग्रहणाधिकारः पञ्चमः ॥ ५ ॥

---

१ ग. °त्तिमिर्व° । २ ग. °भवोऽस्य सू° । ३ ग. °वृतिः स्याच्च° । ४ ख. सूर्ध्वमि° ।
५ ख. ताद्गुवा । ६ ख. वियुता । ७ ख. ग. °रपसेशाम्बु° । ८ ख. °स्तोऽब्जस्तदा° ।

## षष्ठोऽधिकारः।

त्रिभोनिता दर्शविरामलग्नात्क्रान्त्यक्षसंस्कारलवा नतांशाः।
संस्कारदिक्कास्तु हरो नतांशसिद्धांशवर्गान्वितसार्धपङ्क्तिः ॥ १ ॥
२४ १०।३०
त्रिभोनिताकान्तरभागकाष्ठा लवोननिघ्नाग्निभुवो हराप्ताः।
१०
नाडयादिकं लम्बनमर्कतोऽधिके हीने त्रिभोने स्वमृणं तिथौ स्यात् ॥२॥
षड्घ्नलम्बनमितैर्लवैर्वियुग्युक्तवित्रिभनतांशसिञ्जिनी।
स्वाम्बराम्बुधिलवोनिताङ्गुलाद्या नतांशदिगसौ नतिस्त्रिहृत् ॥ ३ ॥
४०
स्पष्टभुक्तिविवराहता हृता मध्यभुक्तिविवरेण सा स्फुटा।
विश्वसंगुणितलम्बनं कलास्तद्विहीनसहिताद्व्यगोः शरात् ॥ ४ ॥
१३
छन्नतादिनतिसंस्कृतादथो षड्गुणस्थितिलवैर्वियुग्युतात्।
द्विस्थदर्शभववित्रिभोदयाल्लम्बने कथितवत्तिथौ कुरु ॥ ५ ॥
मध्यमे स्थितिविहीनयुते तौ स्पर्शमोक्षसमयौ परिवेद्यौ।
मर्दतोऽपि च निमीलनमेवोन्मीलनं च सुधिया प्रविधेयम् ॥ ६ ॥
ग्रासाङ्गुलघ्नं स्थितिखण्डकेन स्वीयं स्वकीयेन हृतं त्वभीष्टम्।
रूपाङ्घ्रियुग्वा कृतकन्दलाढ्यमभीप्सितासन्नमिदं पिधानम् ॥ ७ ॥

इति श्रीमन्महादेवदैवज्ञात्मजकृष्णदैवज्ञविरचिते स्वकृततन्त्ररत्नादुद्धृते करणकौस्तुभे सूर्यग्रहणाधिकारः षष्ठः ॥ ६ ॥

## सप्तमोऽधिकारः ।

व्यगुरविश्च रविस्तिथिपत्रतः समवगम्य गतागतयोर्युतिम् ।
कुरु तिथेः शशिराहुतनू ततः स्थितिशरादिकमत्र पुरोदितम् ॥ १ ॥
युत्या हृता दन्तरसा विधोः स्युर्बिम्बाङ्गुलान्यभ्रनवाक्षचन्द्राः ।
६३२ १५९०
युत्योद्धृता क्ष्मा द्युतिरत्र योगदलं द्वयोस्तत्तरणेरितेः स्यात् ॥ २ ॥
निजेन्दुपर्वणि त्रिभैर्युतोनितस्य दोर्गृहे ।
रवेर्गतायनस्य भूर्द्वयं द्वयं स्वसूर्यदिक् ॥ ३ ॥
१ २ २
नते पञ्च काष्ठातिथी नाडिके स्याच्छशी सार्धभूद्वौ परे प्राचि याम्याम् ।
५ १० १५ १ १॥ २
उदक्संस्कृतावङ्घ्रयो बाणदिक्तो यमोदग्भवैः सव्यमेतैरसव्यम् ॥ ४ ॥
मध्योऽन्यदिक् खग्रहणं तु शेषं मध्यात्परे प्राग्ग्रसनाङ्घ्रिभिश्च ।
स्तः स्पर्शमोक्षाविति खग्रहाच्च संमीलनोन्मीलनके च वामम् ॥ ५ ॥
इदं भवेद्रविग्रहे विलोमतः शशिग्रहे ।
द्विधा द्वयं त्रिधा त्रयं युगानि सायकास्त्रिधा ॥ ६ ॥

रसाः पञ्चधाऽगाश्चतुर्धा द्विधाऽष्टौ विधोश्छन्नजाश्चाङ्घ्रयस्तेऽङ्गुलाद्ये ।
घटीभिर्दलैकार्धयुक्तैकपक्षैः कुयुग्माब्धिषष्ठोन्मितैर्मर्दजाश्च ॥ ७ ॥

| | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ग्रासः | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ |
| चन्द्रग्रासाङ्घ्रयः | २ | २ | ३ | ३ | ३ | ४ | ४ | ४ | ५ | ५ | ५ | ६ |

| | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|
| ग्रासः | १३ | १४ | १५ | १६ | १७ | १८ | १९ | २० | २१ | २२ |
| चन्द्रग्रासाङ्घ्रयः | ६ | ६ | ६ | ६ | ७ | ७ | ७ | ७ | ८ | ८ |

| | | | | |
|---|---|---|---|---|
| घटिः | ०<br>३० | १<br>० | १<br>३० | २<br>० |
| मर्दजा अङ्घ्रयः | १<br>० | २<br>० | ४<br>० | ६<br>० |

---

१ ग. °रविं च रविं° तिथि° ।

चन्द्रे मृगाद्ये यदि सौम्यबाणो मध्यग्रहो वायुदिगुत्तरां ततः ।
याम्ये शरे याम्यहुताशमध्ये कर्कादिषट्के यदि याम्यबाणः ॥ ८ ॥
नैर्ऋत्ययाम्यान्त इषावुदक्स्थे सौम्येशयोर्मध्य इनस्य वामम् ।
विधोर्भवेत्स्पर्शमुखं तु वृत्ते दिगष्टचिह्ने समदन्तकोष्ठे ॥ ९ ॥
शेषं स्थिरं यद्ग्रहणद्वयेऽपि विलम्बनाद्यं गदितं तदत्र ।
सर्वं सुधीभिः परियोजनीयं परेङ्गितज्ञा विबुधाः स्वभावतः ॥ १० ॥
द्वित्र्यब्ध्यक्षेष्वङ्गषट् सप्त सप्त सप्ताष्टच्छन्नाङ्घ्रयश्चाङ्गुलाद्ये ।
ग्रासे भानोः खग्रहांशाङ्घ्रयश्च खग्रासोऽङ्घ्रयर्धोन्मिते भूर्द्वयं च ॥ ११ ॥

| | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| सूर्यस्य च्छन्नाः | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ |
| अङ्घ्रयः | २ | ३ | ४ | ५ | ५ | ६ | ६ | ७ | ७ | ७ | ८ |

| | | |
|---|---|---|
| खच्छन्नम् | ० | ० |
| | १५ | ३० |
| अङ्घ्रयः | १ | २ |

श्रीमन्महादेवदैवज्ञात्मजकृष्णदैवज्ञविरचिते करणकौस्तुभे
तिथिपत्रादेव ग्रहणद्वयसाधनाधिकारः सप्तमः ॥

---

१ ग.° म्यबाणे । २ ख. ग. °धाः धियैव ।

# अष्टमोऽधिकारः ।

*निषेधयन्त्यस्तमिते सुरेज्ये भृगौ तथा वा शुभमङ्गलानि ।
तेन ग्रहाणामुदयास्तकर्म ब्रवीमि कृष्णः शिवतुष्टिकामः ॥ १ ॥
अस्तोदयासन्नदिनं विदित्वा पूर्वोक्तयुक्त्या[1] खचरोष्णरश्मी ।
खगाच्चरं तद्दिनरात्रिमानं त्रिप्रश्नयुक्त्या विदधीत धीमान् ॥ २ ॥
शीघ्राङ्काधस्थकर्णाः स्युर्विधोरर्का नगेन्दवः ।
१२ १७
विश्वे रुद्राः खगास्तिथ्यः कालांशा बुधशुक्रयोः ॥ ३ ॥
१३ ११ ९ १५
कुटिलयो रहिताः शशिना त्वथो शरकलाः कुजतो रसखेन्दवः ।
१०६
रसगुणेन्दव इष्वचलाः क्रमात्खयुगशीतकराः खयुगेन्दवः ॥ ४ ॥
१३६ ७५ १४० १४०
खवेदाः खपक्षाः खनागाः खतर्काः खखाब्जाः कुजाद्येषु पातांशकाः स्युः ।
४० २० ८० ६० १००
ज्ञभृग्वोः स्वमध्याशुकेन्द्रेण हीना अथेषोः कला वाऽङ्गुलानि त्रिभक्ताः ॥५॥
मन्दस्फुटात्खेचरतोऽपि पातात् दोर्ज्या स्वविक्षेपकलाविनिघ्नी ।
स्वशीघ्रकर्णेन[2] हृता शरः स्याद्विपातमन्दस्फुटगोलदिक्कः ॥ ६ ॥
अपमजोत्क्रमसिञ्जिनिका खगात्त्रिभयुताच्च तदूनितखेषुभिः ।
त्रिगुणहृत्कलिकादिशरो हतस्त्वपमसंस्कृतये स भवेत्स्फुटः ॥ ७ ॥
अथ कुजरविजेज्या अस्तमायान्ति पश्चात्
लघुगतय इनेतः प्राक् समुद्यन्ति चेन्दोः ।
इदमपि विपरीतं द्राग् जवाद्वा ज्ञभृग्वो-
र्यदि न कुटिलगौ तौ पूर्वमेतद्बहूक्तम् ॥ ८ ॥
परे प्राक् त्रिभाढ्योनितात्खेटतो येऽपमाक्षांशसंस्कारतो नम्रभागाः ।
खनन्दच्युताश्चोन्नतांशास्तु तज्ज्ये नतांशज्यका क्षेपनिघ्नी विभक्ता ।।९।।
९०
उन्नतांशज्ययाऽऽप्ताः कलास्ताः खगे ह्येकभिन्नांशयोर्बाणनम्रांशयोः ।
स्युर्धनर्णं परस्ताद्विलोमं खगे दृष्टिकर्मेति खेटोदयास्ते त्विदम् ॥ १० ॥

---

* [illegible]

---

१ ख. °क्त्याऽत्र खगोष्ण° । २ ख. स्वशीघ्रेण के° ।

कल्प्यो दृग्ग्रहसूर्ययोर्लघुरिनो लग्नं परोऽत्रान्तरे
पूर्वोक्ता घटिकाः परेऽङ्कभयुजोः कालांशकाः षड्हताः।
६
उक्तेभ्योऽभ्यधिकैर्भविष्यति गतोऽस्तोऽल्पैरमीभिः पुरा
पुष्टैरुद्गमतो ह्युदेष्यति ततः स्वल्पैरपीष्टैरिति ॥ ११ ॥
प्रोक्तेऽष्टकालांशवियोगलिप्ताः खाभ्राग्निनिघ्ना रविभोदयाप्ताः।
३००
तत्सप्तमाप्ता यदि पश्चिमे स्युस्ताः क्षेत्रलिप्ता गतिजान्तराप्ताः ॥ १२ ॥
वक्रे जवैक्येन हृता गतैष्यैराप्तैर्दिनैरस्त उतोदयः स्यात्।
इमौ निरुक्तौ रविणोदयास्तौ नित्योदयास्तावथ संब्रवीमि ॥ १३ ॥
सूर्यास्तकाले खचरोऽल्पकोऽर्कात्सषड्भसूर्यादधिकोऽभ्युदेति।
रात्रौ च यात्यस्तमथोऽन्यथाऽसौ दृक्कर्मभाक् प्राक् परतस्तु खेटः ॥ १४ ॥
खगात्केवलादुद्गमास्ते सषड्भादिते नाङ्कभाढ्यार्कभोग्योऽपि युक्तः।
समध्योदयाढ्यो निशायातकालो भवेत्तत्र तत्कालखेटः स्फुटोऽसौ । १५॥
मुहुस्तु चेन्दोर्यदि गोपलाढ्यन्यूनोऽपि युक्तः प्रतिनाडिकं सः।
पलद्वयेनैव भवेत्स्फुटोऽसौ किं तत्र तात्कालिकशीतरश्मेः॥ १६ ।
अष्टाक्षभा घातयुतोनिता ये गजग्रहा नागनगाश्च तैस्तु।
८ ९८ ७८
तुल्ये रवौ यात्युदयं तथाऽस्तं घटोद्भवोऽत्रास्फुटताऽस्ति काचित् ॥१७॥

इति श्रीमन्महादेवदैवज्ञात्मजकृष्णदैवज्ञविरचिते करणकौस्तुभ
उदयास्ताधिकारोऽष्टमः ॥



---

१ ख. ग. °र्वोक्त्या घ° । २ क. ख. °द्गमेऽस्ते । ३ ख. °भोग्यः समेतः ।

## नवमोऽधिकारः ।

( * अधुना छायाधिकारो व्यक्तीक्रियते । )

प्रागुद्दक्कर्मखगोऽधिकोऽस्तमयतोऽल्पो लग्नतोऽसौ भवेत्
रात्रौ दृश्य इहास्य भोग्यसमयो लग्ने तु कालान्वितः ।
तन्मध्योदययुग्भवेद्दिनगतं खेटस्य भूयोऽपि वा
चन्द्रस्याङ्कपलोनितं स्फुटमथो कार्यं दिनाद्युक्तवत् ॥ १ ॥

९

त्रिप्रश्नोदितवत्खगद्युविगतात्साध्यं प्रभाद्यं ततो
भाद्याद्रात्रिगतं भवेदथ च भा खेटस्य यन्त्रांशतः ।
गद्वा स्वच्छजलादिबिम्बितखगं पश्येद्दृगौच्चान्नयेत्
लम्बं वल्कमिमितिं तु तेन विभजेत्तद्बिम्बलम्बान्तरम् ॥ २ ॥
निघ्नं सूर्यैर्भा ततो द्युमयातं ज्ञात्वा नाडीर्वाऽनुमित्या निशीतः ।

१२

तत्कालोत्थात्खेचरात्तच्चराद्यैर्दृष्टच्छायादेर्विधोर्गोपलाढ्यः ॥ ३ ॥
प्रागुद्दष्टिखेटाङ्कभयुक्तभान्वोरल्पस्विनोऽन्यो ह्युदयोऽन्तराले ।

६

कालो द्युशेषो दिविगोदयेऽसौ निशागतो वा दिविगेऽल्पपुष्टे ॥ ४ ॥
तदूनिताढ्यो दिविगद्युयातः सूर्यास्तकालान्निशि यातकालः ।
ग्लावोऽल्पपुष्टोऽनुमितासु यस्तत्पलैर्युतो नो द्विगुणैः स्फुटोऽसौ ॥ ५ ॥
उदयास्ताधिकारोक्तस्फुटक्रान्तिविधानतः ।
पूर्वोक्तबाहुकोट्याद्यं[2] तत्साधनमिहोदितम् ॥ ६ ॥

इति श्रीमन्महादेवदैवज्ञात्मजकृष्णदैवज्ञविरचिते
करणकौस्तुभे ग्रहच्छायाधिकारो नवमः ॥

---

* धनुश्चिह्नितोऽयं ग्रन्थः ख. ग. पुस्तकयोर्नास्ति।

---

१ ग. 'पलान्वितं । २ ख. ग. °र्धं दिक्साधनमिहोह्यताम् ॥ ६ ॥

## दशमोऽधिकारः ।

* शृङ्गोन्नतौ बहुविधं फलमामनन्ति
चन्द्रोदयेऽन्यदिवसे शशितुङ्गशृङ्गम् ।
लोके चमत्कृतिकरं तत आतनोति
कृष्णो विचित्रगणितं शिवतुष्टिहेतोः ॥ १ ॥

मासाद्ये चरणेऽन्तिमेऽत्र दिवसे शृङ्गोन्नतिर्लोक्यते
सूर्यास्तेऽप्युदयेऽत्र सूर्यहिमगू साध्यौ सपातौ तदा ।
यद्वा सावयवा गतैष्यतिथयः साध्या रविघ्ना लवाः
१२
तैर्युक्तोनितभास्करोऽब्ज इति वा पश्चाङ्गतोऽर्कोऽप्यगुः ॥ २ ॥

क्रान्तेर्भागाः शीतगोर्बाणभागैः संस्कार्यास्ते साङ्गभार्कापमांशैः ।
६
घ्यर्कादिन्दोर्दोर्गुणघ्नाक्षतो ये खाक्षैरंशाः संस्कृतास्तैश्च याम्यैः ॥ ३ ॥
५०

द्विगुणतिथिविभक्तास्तेऽङ्गुलाद्यं स्वदिक्कं
वलनमथ शशाङ्काद्व्यर्कतः कोटिभागाः ।
हर इह तिथिभक्ताः षड्गुणेभ्यो हराप्तं
१५ ३६
हररहितयुतं[1] सत्तदले कोटिकर्णौ ॥ ४ ॥

षडङ्गुलेनात्र विधाय वृत्तं सूत्रेण तस्मिन्वलनं प्रदेयम् ।
शुक्ले पुरस्तात्परतोऽपि कृष्णे कोटिं च केन्द्राद्वलनाय सूत्रे ॥ ५ ॥
दत्त्वाऽत्र कर्णेन विधाय वृत्तं तुङ्गं विषाणं हिमगोरवेहि ।
यद्वोन्नतत्वं वलनान्यदिक्स्थं किंचाल्पकत्वात्परिलेखनेन ॥ ६ ॥

इति श्रीमन्महादेवदैवज्ञात्मजकृष्णदैवज्ञविरचिते करण-
कौस्तुभे चन्द्रशृङ्गोन्नत्यधिकारो दशमः ॥

---

* अयं श्लोको ग. पुस्तके नास्ति ।

---

१ ग. °तं तत्त° । २ ग °नाग्रसू° ।

## एकादशोऽधिकारः ।

*यत्संहितातिकुशलैर्बहुधा फलानि
खेटाहवे मुनिवरैः प्रतिपादितानि ।
तस्मात्तनोति विशदं कविकृष्णशर्मा
तोषाय सर्वविदुषां खगयुद्धकर्म ॥ १ ॥

शरा रसाः सप्त खगास्तथाऽक्षाः पृथक्त्रिभज्याश्रवणान्तरघ्नाः ।
५ ६ ७ ९ ५
दन्तैर्गजाब्जैर्दशभिस्तथाऽङ्गरामैः शरैश्च क्रमशो विभक्ताः ॥ २ ॥
३२ १८ १० ३६ ५

+ त्रिभज्यकायाः श्रवणेऽधिकोने कार्याः पृथक्स्थाः फलहीनयुक्ताः ।
कुजादिबिम्बोत्थकलास्त्रिभक्ता बिम्बाङ्गुलानीति भवन्ति तेषाम् ॥ ३ ॥
ऋज्वोर्गतैष्या युतिरत्र मन्दभुक्तेर्ग्रहाच्छीघ्रजवेऽधिकोने ।
वामं त्वनृज्वोरथ वक्रगैकोऽधिकस्तदैष्याल्पतरो गता चेत् ॥ ४ ॥
विश्लेषलिप्ताश्च तयोर्विभक्ता गत्यन्तरेणाऽऽप्तदिनैर्गतैष्यैः ।
ऋज्वोरनृज्वोश्च यदैकवक्री जवैक्यभक्ताऽत्र युतिः प्रसाध्या ॥ ५ ॥

इत्याप्तैर्दिवसैः खगौ समकलौ स्तश्चालितौ तौ ततो ।[२]
दृक्कर्म द्विविधं प्रसाध्य च तयोर्देयं पुरावत्पुनः ।
तुल्यौ राशिमुखेन तौ स्वविषयोदग्याम्यसूत्रस्थितौ ।
यद्याक्षेण विना ध्रुवाभिमुखगौ द्वाभ्यां कदम्बोन्मुखौ ॥ ५ ॥
कार्यौ तद्विशिखौ[तु] तौ युतिवशात्सूत्रे समाख्यौ स्फुटौ
ध्रौवे वा कुरुताद्ग्रहौ स्वशरदिक् संस्थावथो लघ्विषुः ।
व्यस्ताशौ यदि तच्छरौ समदिशौ चाथैकभिन्नाशयो-
रिष्वोरन्तरयोगतो जिनहृतं खेटान्तरे स्युः कराः ॥ ६ ॥
२४
खेटस्पष्टजवान्तराहतनतिर्गत्यन्तरेणोद्धृता ।
मध्येनेन्द्विनयोः स्फुटा द्युचरयोर्भेदाख्ययोगे भवेत् ।

---

* अयं श्लोको ग. पुस्तके नास्ति । + इदं श्लोकार्धं ग. पुस्तक एव दृश्यते ।

---

१ ग. °रैश्चाग्निहतैर्वि° । २ ग. °तौ दृक्क्रिया ।

मध्येन्द्वर्कजवान्तरेण विहृता स्पष्टस्वगत्या हता ।
स्पष्टा वा स्वनतिः पृथग्द्युचरयोर्भेदोऽन्तरं स्याच्छरः ॥ ७ ॥
स्फुटवलनलवाश्चेद्बाणवेदाधिकाः स्युः
४५
गगननवविशुद्धास्तज्ज्यकावर्गहीनात् ।
९०
त्रिभगुणभववर्गान्मूलभक्ताऽनतिर्या ।
त्रिभगुणगुणिताऽसौ क्षेपसंस्कारयोग्या ॥ ८ ॥
एवं शरे विधिः कार्यो गुणहारविपर्ययात् ।
अभेदयोगे बाणः स्यात्तयोरन्तरसाधने ॥ ९ ॥
अंशादूनेऽपसव्यं कुजमुखखगयोः संगमोऽशाधिके स्यात्
उल्लेखो मानयोगार्धसम इह भवेदंशुमर्दोऽन्तरे चेत् ।
मानैक्यार्धाधिकेऽथो त्विह लघुनि भवेद्भेदयोगोऽत्र नोक्तं
कुर्याद्दृक्कर्म किंतु ग्रहवदिह रवेर्लम्बनाद्यं स्फुटार्थम् ॥ १० ॥

इति श्रीमन्महादेवदैवज्ञात्मजकृष्णदैवज्ञविरचिते करणकौस्तुभे
ग्रहयुत्यधिकार एकादशः ॥

---

१ ख. 'भेदेऽन्त°। २ ख. °र्दोन्तरे।

# द्वादशोऽधिकारः ।

दास्रादष्टौ ध्रुवांशाः कृतिरिभशिखिनो नन्दवेदा द्विषट्काः
८ २० ३८ ४९ ६२
षट्तर्का वेदनन्दा रसदश च गजाशास्त्वगार्कास्तु भाग्यात् ।
६६ ९४ १०६ १०८ १२७
अष्टेन्द्राः पञ्चतिथ्यो वियदगशशिनस्त्र्यष्टचन्द्रा गजाङ्क-
१४८ १५५ १७० १८३
ग्लावो द्व्यब्जद्विकाः स्युः कृतयुगलयमाः खाग्नियुग्मानि मूलात् ॥१॥
१९८ २१२ २२४ २३०
द्व्यब्ध्यक्षीण्यक्षतत्त्वान्यथ कुरसयमा नागतत्त्वानि बाणा
२४२ २५५ २६१ २५८
भं षट्पिण्डाः खदन्ताः शरयमलगुणाः सप्तदेवाः खमन्त्ये ।
२७५ २८६ ३२० ३२५ ३३७ ०
स्वर्णं तेष्वक्षभाघ्नाच्छरत इनहृतात्प्राक्परे याम्यबाणे
१२
व्यस्तं सौम्ये ध्रुवाः स्युर्निजविषयभवास्तेऽन्यथा व्यक्षसंस्थाः ॥२॥
दशार्काः शरा व्यङ्घ्रिवेदा दशेशा रसाः खं नगाः खं पतङ्गाश्च विश्वे
१० १२ ५ ३।।। १०,११ ६ ० ७ ० १२ १३
शिवा द्वौ च सप्ताग्नयो भूर्द्वयं च त्रयश्चाष्ट बाणाः शरा युग्मषट्काः ।
११ २ ३७ १ २ ३ ८ ५ ५ ६२
श्रुतेः खाग्नयोऽक्षाग्नयोऽभ्रं जिनाश्च नगाक्षीणि खं हस्तचित्रादिभेषु
३० ३५ ० २४ २७ ०
विशाखादिषट्के च कर्क्षत्रयेऽपि शरांशा यमाशाः परेषां च सौम्याः ॥ ३ ॥
प्रजापत्यपांवत्सलुब्धाग्न्यगस्त्यध्रुवांशा अपब्रह्महृद्भागकाश्च
कुषट् त्र्यष्टचन्द्राः शशीभास्त्रिबाणा नगेभा युगेभाब्जकाः पञ्चबाणाः ।
६१ १८३ ८१ ५३ ८७ १८४ ५५
शरांशास्तदीयाः खवेदाश्च रामाः खवेदा इभाः सप्तशैला नगाश्च
४० ३ ४० ८ ७७ ७
खरामा इमे लुब्धकागस्त्ययोश्च यमाशाः परेषां च ते सौम्यदिक्काः ॥४॥
३०

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| नक्षत्राणि | अ | भ | कृ | रो | मृ | आ | पु | पु | आ |
| ध्रुवाङ्काः | ० | ० | १ | १ | २ | २ | ३ | ३ | ३ |
| | ८ | २० | ८ | १९ | २ | ६ | ४ | १६ | १८ |
| | ० | ० | ० | ० | ० | ० | ० | ० | ० |
| शराः | उ | उ | उ | द | द | द | उ | उ | द |
| | १० | १२ | ५ | ३ | १० | ११ | ६ | ० | ७ |
| | ० | ० | ० | ४५ | ० | ० | ० | ० | ० |
| ताराङ्काः | ३ | ३ | ६ | ५ | ३ | १ | ४ | ३ | ५ |
| कालांशाः | १४ | २१ | १५ | १४ | २० | १५ | १४ | २१ | १४ |

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| नक्षत्राणि | म | पू | उ | ह | चि | स्वा | वि | अ | ज्ये |
| ध्रुवाङ्काः | ४ | ४ | ५ | ५ | ६ | ६ | ७ | ७ | ७ |
| | ७ | २८ | ५ | २० | ३ | १८ | २ | १४ | २० |
| | ० | ० | ० | ० | ० | ० | ० | ० | ० |
| शराः | उ | उ | उ | द | द | उ | द | द | द |
| | ० | १२ | १३ | ११ | २ | ३७ | १ | २ | ३ |
| | ० | ० | ० | ० | ० | ० | ० | ० | ० |
| ताराङ्काः | ५ | २ | २ | ५ | १ | १ | ४ | ४ | ३ |
| कालांशाः | १४ | १४ | १४ | १४ | १३ | १३ | १४ | १४ | १३ |

| | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|
| नक्षत्राणि | मू | पू | उ | अ | श्र | ध | श | पू | उ | रे |
| ध्रुवाङ्काः | ८ | ८ | ८ | ८ | ९ | ९ | १० | १० | ११ | ० |
| | २ | १५ | २१ | १८ | ५ | १६ | २० | २५ | ७ | ० |
| | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० |
| शराः | द | द | द | उ | उ | उ | उ | उ | उ | उ |
| | ८ | ५ | ५ | ६२ | ३० | ३५ | ० | २४ | २७ | ० |
| | ० | ० | ० | ० | ० | ० | ० | ० | ० | ० |
| ताराङ्काः | ११ | ४ | ४ | १ | ३ | ४ | १०० | २ | २ | ३२ |
| कालांशाः | १५ | १५ | १५ | १३ | १३ | १४ | १७ | १७ | १७ | १७ |

| | प्रजापतिः | अपांवत्सः | लुब्धकः | अग्निः | अगस्त्यः | अपः | ब्रह्महृद् |
|---|---|---|---|---|---|---|---|
| ध्रुवांशाः | २ | ६ | २ | १ | २ | ६ | १ |
| | १ | ३ | २१ | २३ | २७ | ४ | २९ |
| | ० | ० | ० | ० | ० | ० | ० |
| शराः | उ | उ | द | उ | द | उ | उ |
| | ४० | ३ | ४० | ८ | ७७ | ७ | ३० |

अथ नैजदेशविहितध्रुवतः शरतोऽपि भादि खलु खेटाधिया ।
विदधीत यन्त्रलवपूर्वमतो निशि यातकालमथ भग्रहयोः ।
खगयोगसाधनविधेः प्रयुतिं नृपरञ्जनाय विदधीत धिया ॥ ५ ॥

इदं गाथाछन्दः ।

भध्रुवद्युचरभेदकलाभ्यो यातयेयदिवसैर्ग्रहभुक्त्या ।
भध्रुवाद्विविचरेऽधिकहीने स्याद्युतिः कुटिलगे विपरीतम् ॥ ६ ॥

मध्यर्क्षतः[1] स्फुटचरं ध्रुवकात्स्वकीयात् साध्यं ततो दिनदलं तदवाप्य चेष्टम् ।
लग्नं ध्रुवादपि निजोदयकैस्तदङ्गराश्यन्वितार्कविवरे निशि यातनाड्यः ॥ ७ ॥
निजनिजपलभाया मध्यलग्नं विधेयं स्थिरमिति सुखसिध्यै दस्रभादौ खमध्ये ।
उदयति यदि वाऽस्तं प्राप्यमाने तथैव बुधमुद उदयास्ते लग्नके साधनीये ॥ ८ ॥
कभशकटं द्युचरस्तदा भिनत्ति गवि गजचन्द्रलवैर्यदाऽस्य याम्यः ।
१८
यदि विशिखः खशराङ्गुलाधिकः स्यादिति शनिरिन्दुरसृग्जगत्क्षयः स्यात् ॥ ९ ॥
५०

यदाऽष्टभस्थो दितिभाच्च राहुर्भिनत्ति चन्द्रः शकटं कभस्थः ।
पातान्यथात्वे यदि भौममन्दौ युगान्तरे नेह युगेऽल्पबाणे ॥ १० ॥

इति श्रीमन्महादेवदैवज्ञात्मजकृष्णदैवज्ञविरचिते करणकौस्तुभे
नक्षत्रच्छायाधिकारो द्वादशः ।

---

१ ग. °र्क्षतोऽस्फु° ।

त्रयोदशोऽधिकारः ।

* बुधा मुधा यत्र सदा भ्रमन्ति लल्लोऽपि मल्लः प्रतिपक्षभूमौ ।
बभ्राम पाते तत एव सम्यक्तत्साधनं स्वल्पतयाऽभिधास्ये ॥ १ ॥
नन्दा हतायनलवप्रमनाडिकोनाः सार्धास्त्रयोदश तथा द्विगुणास्त एव ।
१३॥ २७
तत्तुल्ययोगविगते व्यतिपात एकोऽन्यो वैधृतिरत्त्वयनयुग्रविचन्द्रयोर्वा ॥ २ ॥
योगश्चक्रदलं चक्रं युतेर्याताश्च नाडिकाः ।
६
स्वभोगघ्नाः खषड्भक्ता मध्यपातस्य मध्यता ॥ ३ ॥
६०
यद्वा षण्नगबाणभूपरिमिताच्छाकाद्गुणघ्नान्नखैः
१५७६ २०
नाड्यूना दश साभ्रवेदघटिकाः सिद्धाः सदिङ्नाडिकाः ।
१० ४० २४ १०
वृद्धेर्ब्रह्मयुतेश्च सांप्रतमिता नाड्यः स्वभोगा हताः
स्पष्टाः षष्टिहृता दिनेऽत्र समता मध्यापमे स्यात्तयोः ॥ ४ ॥
६०
तद्घातयेयसमये न सुधीर्विदध्यात्
सम्यक्स्फुटापमसमत्वमिहेन्दुसूर्यौ ।
पातः शरः स्फुट इहाप्यपमौ च तज्ज्ये
क्रान्तिर्विधोरिह सदा शरसंस्कृतैव ॥ ५ ॥
अपमजोत्क्रमशिञ्जिनिकाखगादिति ॥ ६ ॥
इन्दोरोजपदस्थितस्य कुहचित्स्पष्टापमोर्कापमा-
दल्पो गम्य इतोऽधिकः समपदेऽप्यूह्यस्तु तद्व्यत्ययात् ।
पातश्चेच्छरतो विशुद्ध्यति विधोः क्रान्तिः पदव्यत्ययोऽ-
थार्केन्द्वोर्विषयाहते द्विविहृते[2] स्पष्टाऽपमज्ये तयोः ॥ ७ ॥
स्वाङ्[3]घ्र्याढ्यं धनुरन्तरं यदि गते[4] पातेऽब्जभागे त्वृणं
गम्ये स्वं त्वथ पातभास्करगतौ तद्भागनिघ्ने विधोः ।

* अयं श्लोको ग. पुस्तके नास्ति ।

१ ग. °भू विरहिता । २ ग. °ते क्रान्तिज्यकेऽथ:फले ॥ ७ ॥ ३ ग. स्वेनोने ध° । ४ ग. ऽब्ज° ।

गत्याप्ते शशिवद्रवौ तमसि तद्व्यस्तं रवीन्द्वोः पुनः
क्रान्तीषुप्रमुखं मुहुस्त्विति भवेद्यावत्समौ स्तोऽपमौ ॥ ८ ॥
तत्कालेन्दुः सुस्थिरेन्दोर्यदोनः पुष्टो वा चेत्तद्वियोगस्य लिप्ताः ।
भक्ताश्चेन्दोर्भुक्तिभागैर्घटीभिर्गम्यो यातः पातमध्यस्य कालः ॥ ९ ॥

तस्माद्ध्रुवे स्थितिदलं स्थिरचन्द्रसूर्य-
पाते जवं निजनिजं परिशोध्य भूयः ।
क्रान्ती शशाङ्करविजे समदिग्वियोज्ये[1]
योज्येऽन्यथा भवति तद्व्यतिपातहारः ॥ १० ॥
सोऽप्यन्यथा भवति वैधृतिनामधेयो
रामघ्नमर्कशशिनोस्तनुयोगखण्डम् ।
हारोद्धृतं स्थितिदलस्य च नाडिकास्ताः
पूर्वोत्तरं त्विति भवन्ति च पातमध्यात् ॥ ११ ॥
क्रान्त्यन्तरं तनुयुतेर्दलतोऽल्पकं स्यात्
यावद्भवेत्सुकृतकाल इह प्रदत्तम् ।
स्नातं हुतं बहुफलप्रदमामनन्ति
यात्राविवाहमुखमाङ्गलिकं न शस्तम् ॥ १२ ॥

इति श्रीमन्महादेवदैवज्ञात्मजकृष्णदैवज्ञविरचिते स्वकृततन्त्ररत्ना-
दुद्धृते करणकौस्तुभे पाताधिकारस्त्रयोदशः ।

---

१ ग. °दिश्ययो° ।

तत्संभवासंभवलक्षणं प्राक् विलोक्य धीमान् विदधीत पातम् ।
पश्चाद्ग्रन्थादथवा प्रगृह्य साग्वर्कभानू अपि वा सुखार्थम् ॥ १ ॥
यद्येकगोले रविरागुभानू विभिन्नगोलेऽपि रवेर्भुजांशाः ।
पञ्चेषुतोऽल्पा अपि चास्ति पातः ततोऽधिकाः संशय एव तस्य ॥ २ ॥

५५

तोयादितेयेशगते दिनेशे दितेर्भतो द्वादशगोऽपि राहुः ।
मृगेन्द्रपुष्येऽप्यहिमांशुसंस्थस्तथा श्रुतौ पैत्र्यभषट्कगोऽपि ॥ ३ ॥
मैत्रान्त्यखण्डे च कभे च हस्ताच्चतुष्कसंस्थोऽप्यथ वैश्वदेवे ।
मूलाद्यखण्डे गुरुभार्कसंस्थः पातस्तदा नेत्यपि चैकगोले ॥ ४ ॥

इति पातसंभवासंभवासंभवलक्षणम् ।

---

## स्ववंशकीर्तनपुरःसरं ग्रन्थसमाप्तिवर्णनम् ।

दनुजमनुजदेवादीन्ससर्जाभिसृष्टुः
सुतवर इति योऽभूत् कश्यपो मानसोत्थः ।
हरिहरगणनाथास्तेऽवतीर्णा यतोऽस्मात्
जयति मुनिवरोऽसौ यत्स्मृतिः पापहन्त्री ॥ १ ॥
तदन्वये पावन एव तत्र वंशावतंसोऽभवदुन्नतांसः ।
श्रीमन्महाज्यौतिषिविद्वदग्र्यो नाम्ना महादेव इति प्रसिद्धः ॥ २ ॥
तज्जाया किमु जाह्नवी विजयते बर्वाइनाम्नी सदा
तस्यां तज्जनितः सुपुण्यनिचयः श्रीरङ्गनाथानुजः ।
कृष्णः कौङ्कणसत्तटाकनगरे देशस्थवर्यो वसन्
तेनायं करणेषु कौस्तुभ इति ग्रन्थः कृतो धीमता ॥ ३ ॥
गणितभणितरम्यं दूषणापास्तसंघं(घं)
दृढगुणबहुहारप्रोक्तपद्याभिरम्यम् ।
अभिनवरचनाभिः खेटमध्यादिकर्म
वदति गणकवक्त्रात्कृष्णनाथोक्ततन्त्रम् ॥ ४ ॥

---

१ ग. °मान्गणितं विदध्यात् ।

एवं परोपकरणैकधिया विविच्य
तन्त्राणि मुख्यमुनिमानवनिर्मितानि ।
तत्सारमेव रचितं बुधहंसबुद्ध्या
श्रीसाम्बशंकरपदेऽर्पणमस्तु तस्य ॥ ५ ॥

इति श्रीमन्महादेवदैवज्ञात्मजकृष्णदैवज्ञविरचिते स्वकृततन्त्ररत्नादुद्धृते करणकौस्तुभे ग्रन्थालंकारश्चतुर्दशः ॥

